॥ श्रीराजशेखरप्रणीतं ॥

# बालरामायणन्नाम

नाटकम् ।

काशिकराजकीयपाठशालायां ज्योतिःशास्त्राध्यापकेन

श्रीगोविन्ददेवशास्त्रिणा संशोधितम् ।

एकनवत्युत्तरसप्तदशशतमे शालिवाहनशके

श्रीकाश्यां मेडिकलहालनामके यन्त्रालये मुद्रितम् ।

संवत् १९२६ सन् १८६९

---

# THE BÁLARÁMÁYAṆA.

A DRAMA BY RÁJAŚEKHARA.

EDITED BY

PANDIT GOVINDA DEVA ŚÁSTRI,

PROFESSOR OF HINDU ASTRONOMY IN THE SANSKRIT COLLEGE BENARES.

---

BENARES:

PRINTED AT THE MEDICAL HALL PRESS.

1869.

॥ श्रीराजशेखरप्रणीतं ॥

# बालरामायणन्नाम

नाटकम् ।

काशिकराजकीयपाठशालायां ज्योतिःशास्त्राध्यापकेन

श्रीगोविन्ददेवशास्त्रिणा संशोधितम् ।

एकनवत्युत्तरसप्तदशशतमे शालिवाहनशके

श्रीकाश्यां मेडिकलहालनामके यन्त्रालये मुद्रितम् ।

संवत् १९२६ सन् १८६९

---

# THE BALARAMAYANA.

## A DRAMA BY RAJAŚEKHARA.

EDITED BY

PANDIT GOVINDA DEVA SAŚTRI,

PROFESSOR OF HINDU ASTRONOMY IN THE SANSKRIT COLLEGE BENARES.

---

BENARES:

PRINTED AT THE MEDICAL HALL PRESS.

1869.

# PREFACE.

I have undertaken to edit a work named the Bálarámáyaṇa, an excellent Sanskrit Drama, for the amusement of those learned men who have a good taste for the nectar of the best Sanskrit poetry and are inclined to look only into good qualities. I must give first a short account of its author. The writer of this long drama is a poet named Rájaśekhara, born in the family of the Yáyávara of the Solar dynasty, son of his good mother Satyavatí and a preceptor of Mahendrapála a celebrated king descended from Raghu. This poet, who being very competent in Sanskrit was also fully acquainted with all sorts of Prákrita language, composed the Karpúramañjari Saṭṭaka, a particular kind of Náṭaka (drama) in Prákrita only, and the Viddhaśálabhañjiká Náṭiká in good Sanskrit mixed with an abundance of Prákrita. Mádhavácharya has written the following story about Rájaśekhara in his work Śaṅkaravijaya (5th chapter) "that this poet named Rájaśekhara a contemporary of Śaṅkarácharya was a king of Kerala. He was a great hero and well acquainted with the principles of all the Sciences. He being anxious to see Śaṅkarácharya, sent his ambassador to him and having pleased him by praising him in several ways through the ambassador, got his permission to go to him. Thus he saw Śaṅkarácharya, presented 10,000 golden coins to him and read before him his own three excellent dramas. Rájaśekhara, having thus fulfilled his wishes by winning

the favour of the above named mendicant Śaṅkaráchárya, who was much pleased with him by hearing his dramas, returned to his own city."

At present, only three dramas i. e. Bálarámáyaṇa, Karpúramaṅjarí and Viddhaśálabhaṅjiká composed by this poet are procurable. Therefore, it follows from the above stated story that this poet is a very ancient one. Thus, Rájaśekhara, one of the best of all the kings and poets, composed this excellent drama named Bálarámáyaṇa in ten Acts with a view to give the whole character of Rámachandra, the chief person of his own race, from his childhood. This drama, full of Vírarasa (heroic feeling) contains in some places Śriṅgára (love) and karuṇa (tenderness). In the first Act of this drama, the principal actor declares to one of the actors, by means of the statement of another person Śaṅkaravarman, the character of this work and of its author in two Ślokes given below, in which he says that the fruit resulting from the reading of the best poetry is obtained by the study of this excellent drama, and this poet was endowed with several good qualities.

किं न श्रुतं सभ्यस्य शङ्करवर्मणो वर्णनम् ।
पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥

अपिच ।

आपन्नार्तिहरः पराक्रमधनः सौजन्यवारां निधि-
स्त्यागी सत्यसुधाप्रवाहशशभृत्कान्तः कवीनां गुरुः ।

वर्ण्यं वा गुणरत्नरोहणगिरेः किं तस्य साक्षादसौ
देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्रामणीः ॥

I have got only one copy of this work from my valued friend Dhundirája Śástri, a native of Benares. I tried my utmost to procure another in this as well as in other places, but in vain. I have therefore corrected this copy with great care and got it published in the Pandit or Káśívidyásudhánidhi with the permission of Mr. Griffith our worthy Principal. But to please those learned men who have a good taste for excellent poetry and who cannot avail themselves of the Pandit, I have got it published separately.

Though I have corrected it carefully and attentively as far as my health permitted me, still errors may be found in it, and I beg to ask that if learned men discover any mistakes in it, they will be kind enough to oblige me by informing me of them.

Thus I hope that this excellent drama may be interesting to the learned and thereby crown my endeavours with success.

## ॥ श्रीः ॥

### ॥ प्रस्तावना ॥

---

अथ प्राचीनोत्तमकाव्यसुधास्वादलोलुपानां गुणैकपक्षपातिनां रसिकजनानां प्रीत्यै सकलनाटकावतंसभूतं बालरामायणाख्यं नाटकमिदानीं प्रकाशयितुमिच्छुरादौ तावदेतद्रचयितुर्वर्णनं संक्षेपतः कुर्वे। अस्य महानाटकस्य रचयिता सूर्यवंशीययायावरकुलजन्मा सत्यवतीतनूजो रघुकुलचूडामणेर्महेन्द्रपालस्य गुरुः श्रीराजशेखरः कविरस्ति। सोऽयं संस्कृतेऽतिनिष्णातोऽपि सर्वविधप्राकृतभाषार्णवपारदृश्वा केवलया प्राकृतभाषयैव कर्पूरमञ्जर्याख्यं सट्टकाभिधं नाटकविशेषं प्राकृतबहुलातिप्रौढसंस्कृतभाषया विद्धमरोहरां विद्धशालभञ्जिकाख्यां नाटिकां च व्यतनोत्। अयं च कविरतिशूरः सकलशास्त्रार्थतत्त्ववेत्ता केरलक्षितिपतिः श्रीशङ्कराचार्यसमकालिको राजशेखराख्यो राजा ऽऽसीत्। अयमतिमानुषचरित्रं श्रीशङ्कराचार्यं विदुस्तत्र तदनुमतिं लब्धुकामस्तत्समीपे स्वसचिवं प्रेष्य तद्द्वारा कृताभिर्बहुविधाभिः स्तुतिभिस्तोषितात् श्रीशङ्कराचार्यादासादिततत्समीपगमनानुज्ञस्तत्र गत्वा हाटकायुतसमर्पणपूर्वं स्वप्रणीतमपूर्वं नाटकत्रयमाचचक्षे। तन्नाटकत्रयश्रवणेनातिसंतुष्टवतस्तस्मात् भिक्षोर्लब्धस्वाभिमतवरः स्वीयां पुरीमाजगामेति शङ्करविजयीयपञ्चमसर्गस्थैवमेनमतिमर्त्यचरित्रमिति दशमश्लोकमारभ्यागमत् कृतकृत्यधीर्निजां नगरीं

तस्य गुणानुद्दीरयन्नित्यन्तैरेकविंशत्या श्लोकैरिमां कथां तद्ग्रन्थकारः श्रीमाधवाचार्यो व्यलिखत्। उपलभ्यते चैषु दिवसेषु बालरामायणं कर्पूरमञ्जरी विद्धशालभञ्जिकेति नाटकत्रयमेवैतत्कविप्रणीतम् । एतेनास्य कवेरतिप्राचीनत्वं द्योत्यते । एवमयं राज्ञां कवीनां च शेखरभूतो राजशेखरनामा कविः स्ववंशमौक्तिकमणिः श्रीरामचन्द्रस्य बाल्यदशामारभ्य समग्रं चरितं विवक्षुरेतद्दशाङ्कघटितमपूर्वं बालरामायणाख्यं महानाटकमकरोत् । एतन्नाटकमपि प्रसन्नराघवमिव वीररसप्रधानं स्थलविशेषे शृङ्गारकरुणरसगर्भितं चास्ति । अतः समीचीनकाव्यपठनजनितफललाभ एतदुत्तमकाव्यस्य सुधास्यन्दिनीनां सूक्तीनां श्रवणेन भवेद्वयं च कविरनेकोत्तमगुणालङ्कृतश्चासीदित्येतत्प्रथमाङ्कस्थाभ्यां पारिपार्श्विकं प्रत्यन्योक्तिद्वारा सूत्रधारवचनरूपाभ्यामधिमश्लोकाभ्यां स्फुटमवगम्यते । तथाच सूत्रधारोक्तिः ।

किं न श्रुतं सभ्यस्य शङ्करवर्मणो वर्णनम् ।

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥

अपिच ।

आपन्नार्तिहरः पराक्रमधनः सौजन्यवारांनिधि-
स्त्यागी सत्यसुधाप्रवाहशशभृत्कान्तः कवीनां गुरुः ।
वर्ण्यं वा गुणरत्नरोहणगिरेः किं तस्य साक्षादसौ
देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्रामणीः ॥

अथास्य नाटकस्यैकमेव पुस्तकमत्रैव काश्यां निवसतः परम-सुहृदो ढुण्ढिराजाचार्यशास्त्रिणः सकाशान्मयाऽऽसादितम्। ततः परमस्यां नगर्यामन्यनगरीषु चैतत्पुस्तकान्तरलाभायाति-मार्गणपरोऽप्यलब्धपुस्तकान्तर एतत्पुस्तकमेव महता परि-श्रमेण सम्यक् परिशोध्य पाठशालाध्यक्षस्य श्रीमतो ग्रिफिथसाहिबस्याज्ञया काशीविद्यासुधानिधिपत्रे मुद्रितमप्ये-तत्पत्रग्रहणासमर्थानां रसिकजनानामानन्दाय पृथङ् मुद्रितं कर्तुमुद्यतोऽस्मि ।

अतः सर्वैश्वर्यवन्तं विनतजनमनःसंतोषदायिनं श्रीपरमे-श्वरमिदमेव प्रार्थये यत् सहृदयानां मनःस्वेतदुत्तमं काव्यं परमां मुदमादधात्वित्यलं बहुलेखनेनेति शम् ।

गोविन्ददेवशास्त्री



## ॥ श्रीगणेशाय नमः ॥



प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना
य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना ।
यदात्मानो विद्याः परिणमति यश्चार्थवपुषा
स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥ १ ॥

नाद्यन्ते सूत्रधारः ससंरम्भं परिक्रम्य पुरो ऽवलोक्य सप्रश्रयमञ्जलिं बद्ध्वा भोभो भुजस्तम्भलालिततलक्ष्मीकरेणुना रघुकुलैकतिलकेन महेन्द्रपालदेवेनाधिकृताः सभासदः सर्वानेष वो गुणनिधिर्विज्ञापयति विदितमेवैतद्भवताम् । यत्तु नाट्याचार्येण धूर्तिलेन प्रतिज्ञातम् ।

वीराद्भुतप्रायरसे प्रबन्धे
लोकोत्तरं कौशलमस्ति यस्य ।
नाट्ये च नृत्ये च परं प्रवीण-
मसौ सुतां मे परिणेष्यतीति ॥ २ ॥

तत्र दक्षिणापथादागतो रङ्गविद्याधरनामा भरतपुत्रो भवद्भिः परीक्षितो नच निर्व्यूढस्तन्मामपि परीक्षध्वम् । कर्णं दत्त्वा ऽऽकाशे किं ब्रूथ विलक्षेण सता कर्णाटनटेन तेन निर्मर्यादमिदमुदितम् । यद्गुताखण्डितप्रसरा हि पुरुषकाराः कर्णाटानां तथाहि ।

अहमेष हरिष्यामि परिणेतुः पुरोऽपि ताम् ।
नारीपरिभवं सोढुं दाक्षिणात्या न शिक्षिताः ॥ ३ ॥

अञ्जलिं बद्ध्वा तदिदं मयापि निवेद्यते यदि हि परिणयामि ।

अपि द्वीपान्तरादेष हृतां प्रत्याहरामि ताम् ।
कलत्रहरणे पुंसां कियदर्णवलङ्घनम् ॥ ४ ॥

इति ।

विचिन्त्य । किं पुनस्तत् ।

प्रविश्य पारिपार्श्विकः । एदं तम् * ।

सूत्रधारः । मारिष किमिदम् ।

पारिपार्श्विकः । देवादेसपत्तं तं णिरूवेदु भाओ † ।

सूत्रधारः । सखेदम् । कथमन्यदुपक्रान्तमन्यदापतितं सोयमातपार्थिनः पयोदाभ्युदयः । विचिन्त्य । सविघ्नविमुष एव काम्यक्रियारम्भाः । विभाव्य आम् अनिर्वेदः सिद्धेर्मूलम् । निश्चित्य भवत्वेवं तावत् । प्रकाशम् । मारिष रसान्तरेण नावहितं मे चेतः । तद्भवानेव वाचयतु ।

पारिपार्श्विकः । गृहीत्वा वाचयति ।

क्कमवड्ढन्तविलासं रसाअले कं करेइ कन्दप्पो ‡ ।

सूत्रधारः । अये प्रश्नोत्तरम् । सेयमस्मत्प्रीतिरितिदेवादेशः । तत्स्वयमेव वाचयामि । गृहीत्वा वाचयति ।

निर्भयगुरुः § व्यधत्त च वाल्मीकिकथां किमनुसृत्य ॥ ५ ॥

---

* एतत् तत् ।

† देवादेशपत्रं तत् निरूपयतु भावः ।

‡ क्रमवर्धमानविलासं रसातले कं करोति कन्दर्पः ।

§ निर्भयराजस्य महेन्द्रपालस्य गुरुरुपाध्यायो राजशेखरः । तथाच कर्पूरमञ्जर्याम् ।

बालकई कइराओ णिब्भअराअस्स तह उवज्झाओ ।
इय जस्स परम्पराए अप्पा माहप्पमारूढो ॥

अस्यार्थः ।

बालकविः कविराजो निर्भयराजस्य तथा उपाध्यायः ।
इति यस्य परम्परया आत्मा माहात्म्यमारूढः ॥

कथं भाषाचित्रक्रमेकालापकं चैतत् स्वगतं सूचनाक्रमोपि विचिन्त्य । वालरामाश्रणम् * । विमृश्य नाटयितव्यमित्यर्थतो ऽभिहितं भवति ।

पारिपार्श्विकः । अहो अच्चरिअमच्चरिअम् † । अएणं लिहिदं अएणं पढीअदि ।

सूत्रधारः । सहर्षम् । अनुकूलं हि दैवं सर्वस्मै स्वस्तिकरोति यत्प्रस्तुतसंवादी दैवादेशः ।

पारिपार्श्विकः । दिट्ठिआ कालिंदीमन्दाइणीसलिलं विअ पढमं दुधा पहाविअ पच्छा तं कज्जं एक्कीभूदम् ‡ ।

सूत्रधारः । सहर्षम् । संप्रति हि ।

सद्विज्ञानं कुलतिलकतां याति द.रैरुदारैः
फुल्ला कीर्त्तिर्भ्रमति सुकवेर्दिक्षु यायावरस्य ।
धीरोदात्तं जयति चरितं रामनाम्नश्च विष्णोः
काव्यव्याजात्तदियमपरा काप्यहो कामधेनुः ॥ ६ ॥

पारिपार्श्विकः । वम्मीइणा मुणिवरिट्ठेण दिट्ठणिबन्धणस्स रामचन्दचरिदस्स को उण सो विसेसो जं एस कई दंसइस्सदि § ।

---

* बालरामायणम् ।

† आश्चर्यमाश्चर्यम् । अन्यत् लिखितमन्यत् पठ्यते ।

‡ दिष्ट्या कालिन्दीमन्दाकिनीसलिलमिव प्रथमं द्विधा प्रवाह्य पश्चात् तत् कार्यमेकीभूतम् ।

§ वाल्मीकिना मुनिवरिष्ठेन दृष्टनिबन्धनस्य रामचन्द्रचरितस्य कः पुनः स विशेषो यमेष कविर्दर्शयिष्यति ।

सूत्रधारः । मारिष क्वचित्कश्चित्प्रगल्भते नहि सर्वः सर्वं जानाति ।

पारिपार्श्विकः । भाव णं भणामि पच्चक्खीकिदसअलसग्गसद्दत्थादो तत्थभवदो महेसिणो अदिक्कमिअ किं एस चम्मचक्खू पेक्खिस्सदि * ।

सूत्रधारः । मारिष मामैवम् ।

वदनेन्दुषु वामदृशामिन्दीवरपत्त्रसंघटितम् ।
रसनासु च सुकवीनां निवसति सारस्वतं चक्षुः ॥७॥

प्राज्ञश्चायम् । वस्त्वन्तरमतिशयानो हि प्रज्ञाप्रकर्षः । सूक्तमिदं तेनैव महामन्त्रिपुत्त्रेण ।

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं गणयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ८॥

पारिपार्श्विकः । ता णमक्कारो करीअदु † ।

सूत्रधारः । ननु नमस्कृतं तेनैव ।

योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः ।
वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥९॥

प्रबन्धोपक्रमे च स किल कविरेवमुक्तवान् ।

ब्रह्मभ्यः शिवमस्तु वस्तु विततं किंचिद्वयं ब्रूमहे
हे सन्तः शृणुतावधत्त विधृतो युष्मासु सेवाञ्जलिः ।

---

* भाव ननु भणामि प्रत्यक्षीकृतसकलसर्गशब्दार्थात् तत्रभवतो महर्षेरतिक्रम्य किमेष चर्मचक्षुः प्रेक्षिष्यते ।

† तन्नमस्कारः क्रियताम् ।

यद्वा किं विनयोक्तिभि र्मम गिरां यद्यस्ति सूक्तामृतं
माद्यन्ति स्वयमेव तत्सुमनसो याच्ञा परं दैन्यभूः॥ १०॥
सर्वभाषाविचक्षणश्च स एवमाह ।

गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् ।
विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे
निबद्धा यस्त्वेषां स खलु निखिलेऽस्मिन् कविवृषा॥ ११॥

एतत्प्रबन्धमहत्वं प्रति तेनेदमुक्तम् ।

ब्रूते यः कोपि दोषं महदिति सुमतिर्बालरामायणेऽस्मिन्
प्रष्टव्योऽसौ पटीयानिह भणितिगुणो विद्यते वा नवेति।
यद्यस्ति स्वस्ति तुभ्यं भव पठनरुचिर्विद्धि नः षट् प्रबन्धा-
न्नैवं चेद्दीर्घमास्तां नटबटुवदने जर्जरा काव्यकन्या ॥ १२॥

पारिपार्श्विकः । विहस्य भाव अलङ्किदकदमगोत्तो पवि-त्तीकिदकदमणामहेओ एस कई जस्सिं णाम भावस्स देवस्स अ एव्वं पक्खवादो * ।

सूत्रधारः । अय्यनभिज्ञ गगनार्णवमाणिक्यं पूषणमपि तर्हि पृच्छ ।

स मूर्त्तो यत्रासीद्गुणगण इवाकालजलदः
सुरानन्दः सोऽपि श्रवणपुटपेयेन वचसा ।
नचान्ये गण्यन्ते तरलकविराजप्रभृतयो
महाभागस्तस्मिन्नयमजनि यायावरकुले ॥ १३ ॥

* अलङ्कृतकतमगोत्रः पवित्रीकृतकतमनामधेय एष कविर्यस्मिन् नाम भावस्य देवस्य चैवं पक्षपातः ।

तदामुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः शीलवतीसूनुरुपाध्यायश्रीराजशेखर इत्यपर्याप्तं बहुमानेन। स्मृतिं नाटयित्वा अहो किमपि कमनीया कवेरात्मन्याशीः।

आद्यः कन्दो वेदविद्यालतानां
जैहं चक्षुर्निर्निमेषं कवीनाम्।
यो येनार्थी तस्य तत् प्रक्षरन्ती
वाङ्मूर्तिर्मे देवता सन्निधत्ताम्॥ १४॥

इदं च सूक्तमुक्तवान्।

जिह्वे देवि सरस्वतीं भगवतीमग्रे समयां कुरु
त्वां बद्धाञ्जलि राजशेखरकविः सोऽयं स्वयं याचते।
स्तुत्येऽस्मिन्निजवंशमौक्तिकमणौ रामे विरामे द्विषां
कुण्ठा मे प्रतिभैव दैवतवशाद्वाचां प्रवृत्तिर्यदि॥ १५॥

पारिपार्श्विकः। ता किं एण वण्णीअदि *।

सूत्रधारः। ननु वर्णितमेव दैवज्ञेन।

बभूव वल्मीकभवः कविः पुरा
ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया
स वर्त्तते संप्रति राजशेखरः॥ १६॥

अपिच। किं न श्रुतं सभ्यस्य शङ्करवर्मणो वर्णनम्।

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रससोतसः।

---

* तत् किं न वर्ण्यते।

भोक्तुं स्वादु फलं च जीविततरो यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ १७

अपिच ।

अपवार्त्तिहरः पराक्रमधनः सौजन्यवारांनिधि-
स्त्यागी सत्यसुधाप्रवाहशशभृत्कान्तः कवीनां गुरुः ।
वर्ण्यं वा गुणरत्नरोहणगिरेः किं तस्य साक्षादसौ
देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्रामणीः ॥ १८ ॥

नेपथ्ये गीयते ।

मुक्कहरिणाङ्कमण्डलपासप्पसरो बुधो विबुहवग्गो ।
ओत्थरिअ राहुविहुरं णलिणीणाहं समुल्लिहइ * ॥ १९ ॥

सूत्रधारः । आकर्ण्य कथमुपश्रुतदेवादेशैः कुशीलवैरुपक्रान्त-मेव यदियं शुनःशेपस्य प्रावेशिकी ध्रुवा । विमृश्य ध्रुवा हि नाम नाट्यस्य प्रथमे प्राणाः । तथाहि ।

प्रथयति पात्रविशेषान् सामाजिकमनांसि रञ्जयति ।
अनुसंदधाति च रसान् नाट्यविधाने ध्रुवा गीतिः ॥ २० ॥

तदेह्यावामप्यनन्तरकरणीयाय सज्जीभवाव इति निष्क्रान्तौ । आमुखम् ।

ततः प्रविशति शुनःशेपः ।

शुनःशेपः । प्रातःसवन एव यजमानं द्रष्टुमिच्छामि । तत्र कश्चित्सन्ध्यां वन्दमानस्य मे कालातिपातः संवृत्तः । ऊर्ध्वमवलोक्य कथमद्याप्यपटिष्ठमाञ्जिष्टं च मञ्जु मार्त्तण्डीयं तेजः । तथाहि ।

---

* मुक्तहरिणाङ्कमण्डलपार्श्वप्रसरो बुधो विबुधवर्गः ।
अवतीर्य राहुविधुरं नलिनीनाथं समुल्लिखति ॥

उषःप्रवालद्रुमबालपल्लवा-
स्त्रिलोकहर्म्याङ्गणहस्तदीपिकाः ।
दिनद्विपेन्द्रारुणकर्णचामरा
मरीचयोऽर्कस्य लुठन्ति कोमलाः ॥ २१ ॥

स्मृत्वा ।

यदेतदग्रेसरमम्बरस्थं
ज्योतिः स पूषा पुरुषः पुराणः ।
अथास्य शिष्यः किल याज्ञवल्क्य-
स्तस्यापि राजा जनकः स योगी ॥ २२ ॥

राक्षसक्षौबधं रामभद्रमानेतुं सिद्धाश्रमादयोध्यां गच्छता तातविश्वामित्रेण यज्ञोपनिमन्त्रकस्य परमसुहृदः श्रोत्रियक्षत्रियस्य महाराजसीरध्वजस्य स्वप्रतिनिधिः प्रेषितोऽस्मि । आसन्नसत्रसमयस्य चागच्छतोऽध्वरविधिरवभृथावशेषो वर्तत इति मे तर्कः । तदेष राजर्षेः सौत्रातिकोऽपि भवन् न गुरोरपराधभूमिः स्यामिति परिक्रामति ।

प्रविश्य तापसच्छद्मना राक्षसः । स्वगतम् ।

संप्रेषितो माल्यवताहमद्य
ज्ञातुं प्रवृत्तिं कुशिकात्मजस्य ।
पुरं निमीनां मिथिलां च गन्तुं
तां चाप्ययोध्यां रघुराजधानीम् ॥ २३ ॥

कुलपुत्रक इति सप्रसादमादिष्टश्चास्मि । यथा सीतानाम्नीमयोनिजां जनककन्यां धूर्जटिधनुरारोपणपणपरिणेयां देवो दशाननः श्रुतवान् । तस्य मर्त्यमण्डलचाराधिकारनियुक्ता सहा-

दरी शूर्पणखा नित्यमेवंविधानां राजकार्याणां संपादयित्री उचितविधायिनी च मे वत्सा। प्रभुचित्तानुवर्त्तनं हि सेवकजनसिद्धविद्या। सीतार्थी च मिथिलां प्रस्यातुकामो महाराजरावणः। किं बहुनाऽयमपरो गण्डस्योपरि पिण्डिकोद्भेदो यत्किल प्रस्थास्यमानेन निशाचरचक्रवर्तिना तत्रभवतो नीललोहितान्तेवासिनः पार्वतीधर्मपुत्रकस्य जामदग्न्यस्य सकाशं परशुमार्गणाय मायामयः प्रहितः। तदिदमसमञ्जसमिव पश्यामि। यतः।

शमव्यायामाभ्यां प्रतिविहिततन्त्रस्य नृपतेः
परं प्रत्यावापः फलति कृतसेकस्तरुरिव।
बहुव्याजं राज्यं न सुकरमराज्यप्रणिधिभि-
र्दुराराधा लक्ष्मीरनवहितचित्तं चलयति ॥ २४ ॥

विमृश्य। अहह। अनमात्यायतसिद्धेर्धिङ्मन्त्रित्वम्। कुतः।

स्वेच्छया कुरुते स्वामी यत्किंचन यतस्ततः।
तत्तत् प्रतिचिकीर्षन्तो दुःखं जीवन्ति मन्त्रिणः ॥ २५ ॥

विचिन्त्य। तद्बद्ध्विष्यदनर्थयेोर्भवदनर्थं प्रथमं प्रतिकुर्वीतेति नीतिविदः। तदेष सीतावृत्तान्त एव प्रथमं प्रतिविधातव्यः। भद्रमुख तत्त्वया मेनकाकामुकस्य त्रिशङ्कुयाजिनः क्षत्रियब्राह्मणस्य तस्य प्रवृत्तिरस्मासु निवेदनीया स च सिद्धाश्रमादुच्चलित इति श्रुतिः। तस्य दशरथः सीरध्वजश्च परं मित्रे। तत्र यदि दशरथं प्रति यायात् तदहमन्यापदेशेन दशकन्धरस्य यात्राभङ्गाय यतिष्ये। स हि नक्तंचराणां निसर्गामित्रो विश्वामित्रः। व्रतचर्यया वीरव्रतचर्यया च समर्थः। दशरथोऽपि तथाविध एव। जनकश्च योगी शान्तो दान्तश्च। अहं तु

मिथिलां पुरीं प्रत्युच्चलितस्तत्त्वरितमिमां विचित्य रघुराजधानीं यास्यामि । विमृश्य तादृश एव तादृशानामपसर्पः स्यादिति कृततापसवेषोऽपि महर्षिभ्यो बिभ्यत् संचरामि । पुरोऽवलोक्य कथं तापसः । प्रत्यभिज्ञाय तत्रापि विश्वामित्रधर्मपुत्रः शुनःशेपः । भवत्वस्मादेव तत्किंवदन्तीलाभः । उपसृत्य भगवन्नभिवादये ।

शुनःशेपः । अभिलषितेन युज्यस्व ।

इति परिक्रामतः ।

राक्षसः । विलोक्य भगवन् साम्प्रदीनं सख्यं मां मुखरयति तत्प्रष्टुकामोऽस्मि ।

शुनःशेपः । ब्रह्मन्नभिधीयताम् ।

राक्षसः । विद्यास्नातक इव लक्ष्यसे तत् कथमयं स्वाध्यायप्रत्यूहः ।

शुनःशेपः । गुरोरादेशः ।

राक्षसः । कस्ते गुरुः ।

शुनःशेपः । भगवान्विश्वामित्रः ।

राक्षसः । स्वगतम् । भवतु कोपयाम्येनम् । सुप्तमत्तकुपितानां हि भावज्ञानं द्रष्टव्यम् । प्रकाशम् । अथ कोऽयं विश्वामित्रो नाम ।

शुनःशेपः । सकोपम् । अये द्वीपान्तरादिवागतोऽसि यद्भगवन्तं विश्वामित्रमपि न जानासि ।

न्यस्यान्यान् दक्षिणस्यां दिशि गगनमुनीन् सप्त क्लृप्तत्तपक्षो
नव्यं हव्यं च कृत्वा त्रिदशजनकृते सर्वयागाङ्गवर्गे ।

वासिष्ठीं शापमुद्रां सपदि विदलयन् यो महासत्त्रबन्धे
मध्येव्योम त्रिशङ्कोः शतमखविमुखः स्वर्गसर्गं चकार ॥ २६॥

अपिच ।

क्षत्रब्रह्ममहानिधिः क्षितिभुजां जेता मुनीनां च यः
पाणी यस्य परं पवित्रिततलौ चापस्रुचोर्धारणात् ।
विश्वामित्र इति त्रिलोकतिलकं त्वं वेत्सि नास्मद्गुरुं
योऽस्मिंश्चित्रशिखण्डिनां भगवतां धात्रा कृतः सप्तमः ॥२७॥

संप्रत्येव राक्षसभयात् सत्त्रे दीक्षिष्यमाणः स भगवान् रक्षितारं रामभद्रं वरीतुमयोध्यां गतः ।

राक्षसः । सत्रासम् । भगवन् । मा कोपीः । बटुस्वभावसुलभं चापलमत्रापराध्यति न पुनरज्ञानम् । कःपुनःस्तम्भितरम्भं भगवन्तं विश्वामित्रं न जानाति । स्वगतम् । कृतं यत् कर्तव्यम् । संप्रति चारसंचारस्यावसरः । प्रकाशम् । क्व पुनर्गुर्वादेशो गमयिता ।

शुनःशेपः । मिथिलापुरीम् ।

राक्षसः । किं तत्र ।

शुनःशेपः । गुरुसुहृदो राजर्षेः सीरध्वजस्य यज्ञोपस्थानम् । ब्रह्मंस्त्वमपि वैदेशिक इवासि तत्कुतः पुनरिदमागम्यते ।

राक्षसः । स्वगतम् भवत्वेवं तावत् । प्रकाशम् । रोहणाचलपरिसरोत्तंसादगस्त्याश्रमतः ।

शुनःशेपः । किंचित्सानुशयम् । कोयमगस्त्यो नाम ।

राक्षसः । विहस्य भगवन् कृतप्रतिकृतमेतत् । निजोदयनिर्विषीकृतभुवनाम्भस्कं कः पुनरगस्त्यं न जानाति ।

निषेद्धा विन्ध्यस्य प्रथमचुलुकाचान्तजलधिः
कृतापद्धातापेर्न स कलशभूः कस्य विदितः ।
गुरुर्लोपामुद्राहृदयदयितो यस्त्रिजगत-
स्त्रयीं माणिक्याद्रेरधिवसति वैखानसवृषा ॥ २८ ॥

शुनःशेपः । परस्परं गुर्वधिक्षेपादुभावपि प्रायश्चित्तिनौ वर्तावहे ।

राक्षसः । तदनुजानीहि मामघमर्षणाय ।

शुनःशेपः । निर्वर्तितगुर्वाज्ञोऽहमपि प्रायश्चित्ते यतिष्ये । किन्तु किंचित्प्रष्टव्यमस्ति ।

राक्षसः । नियोजय ।

शुनःशेपः । लङ्कोपकण्ठवर्तिनि तत्राश्रमपदे कश्चिदस्ति दशकण्ठोदन्तः ।

राक्षसः । यत्किल स्थाणवीयधनुरारोपणपणेन रावणः सीतां परिणेष्यतीति तत्र कश्चिदेवंविधः ।

शुनःशेपः । विहस्य स्वगतम् । अये लघुचित्तवृत्तिनिर्भिन्नहृदयार्थो राक्षस इवैषः । युक्तियुक्तं चैतत् ।

अगर्भसंभवां कन्यां दशकण्ठो जगज्जयी ।
आरोप्य हरकोदण्डं कथं न परिणेष्यति ॥ २९ ॥

प्रकाशम् । ब्रह्मन्ननुमन्यस्व मां मिथिलाप्रवेशनाय ।

राक्षसः । मामपि कार्यवशादितो गत्वा प्रायश्चिताय ।

इति निष्क्रान्तौ । शुद्धविष्कम्भकः ।

ततः प्रविशति पुष्पकेण रावणः प्रहस्तश्च ।

रावणः ।

यस्यारोपणकर्मणापि बहवो वीरव्रतं त्याजिताः
कार्यं सज्जितबाणमीश्वरधनुस्तद्दोर्भिरेभिर्मया ।

स्त्रीरत्नं तद्गर्भसंभवमितो लभ्यं च लीलायिता
तेनैषा मम फुल्लपङ्कजवनी जाता दृशां विंशतिः ॥ ३० ॥

प्रहस्तकः। सर्वतोऽवलोक्य कथं दश।ननदेवदर्शनाकाङ्क्षि वृन्दारकवृन्दामिरमयन: समग्रमपि गगनाभोगं बिभर्ति। साक्षेपम्।

वह्ने निर्होतुमर्चिः परिचिनु पुरतः सिञ्चतो वारिवाहान्
हेमन्तस्यान्तिके स्याः प्रथयति दवथुं येन ते ग्रीष्म नोष्मा।
मार्तण्डाश्चण्डतापप्रशमनविधये धत्त नाडीं जलार्द्रां
देवो नान्यप्रतापं त्रिभुवनविजयी मृष्यते श्रीदशास्यः ॥ ३१ ॥

रावणः। सौत्सुक्यं हंहो नभस्तरुपुष्प पुष्पक किंचिदुच्यसे।

सेवागतामरविमानसहस्रसेनाः
सीमन्तयन् मम मनोजयिना जवेन।
तां मैथिलस्य नृपतेर्व्रज राजधानीं
यत्राद्भुतं हरधनुर्धरणीसुता च ॥ ३२ ॥

प्रहस्तकः। किमद्याप्युत्कण्ठते देवः। नन्ववतीर्णममुना गगनार्णवपोतपात्रेण विमानराजेन जनकमन्दिरे। तद्भवतु देवागमनं सीरध्वजाय निवेदयामि। उच्चैः।

वामैराकृष्य वेगात् प्रगुणितशिरसः पाणिभिः केशबन्धान्
सव्यैरव्याजशस्त्रप्रणयनपटुभिश्छिन्दतः कण्ठपीठीः।
मन्वानस्यानुरूपामुपकरणगतिं प्रीतये चन्द्रमौले-
र्यस्यान्तस्तोषपोषं व्यधित दशमुखी विंशतिर्बाहवश्च ॥ ३३ ॥

सोऽयं स्वयंग्रहणदुर्ललितो दशास्य-
स्त्वां याचते दुहितरं पणपूर्वमेव।

संबन्धसन्धिमनुना च सहानुभूय
वंशो निमेर्जयतु यावदियं धरित्री ॥ ३४ ॥

कर्णं दत्त्वाऽऽकाशे किं ब्रूथ सोऽयं पुराणब्रह्मवादी याज्ञवल्क्यशिष्यो राजर्षिर्जनक आङ्गिरसेन पुरोधसा सार्धमितोऽभिवर्तते । तदिदमास्थानमण्डपोपकण्ठमधिष्ठीयतामित्यवतरतः ।

ततः प्रविशति जनकः शतानन्दश्च ।

जनकः ।

यन्मीमांसयतः श्रुतीः शतपथाः साक्षात्कृतब्रह्मणो
विश्वामित्रमहामुनेरपि वयं वर्त्तामहे चेतसि ।
अप्युन्मीढकषायपावनधियां सद्यः समाधिश्लथं
तत्सङ्गीतकमन्तरेण हृदयं हर्षान्नरीनर्ति नः ॥ ३५ ॥

शतानन्दः । राजर्षे सूर्यप्रशिष्य सत्याशिषस्ते गुरवो यद्भगवान् विश्वामित्रोऽपि मैत्रीमनुरुध्यते । प्रहृष्टस्तदेव पठति ।

जनकः । आकर्ण्य । अये तपस्यतामपि न निरत्ययः सुखप्रत्ययः । यत् सीतार्थी दशकण्ठोऽपि गृहानुपगच्छति ।

शतानन्दः । अहह । आश्चर्यमेकोऽपि गरीयान् दोषः समग्रमपि गुणग्रामं दूषयति । तथाहि ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्यापुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ ३६ ॥

जनकः । सखेदम् । भगवन्नौतथ्य गृहानुपगताय सीतार्थिने लङ्केश्वराय किमुत्तरम् ।

शतानन्दः । राजर्षे चिरं दत्तमेवोत्तरम् ।

जनकः । भगवन् केन ।

शतानन्दः । भगवता शिपिविष्टेन ।

जनकः । किमिव ।

शतानन्दः । स्वधनुः ।

जनकः । निःश्वस्य ।

गिरिशधनुरधिज्यं रावणः कर्तुमीष्टे
करतुलितहराद्रेर्दुष्करं किं हि तस्य ।
किमुत न स निमीनां यौनसंबन्धयोग्य-
स्तदिति हि मम चित्तं चिन्तया मूर्च्छतीव ॥ ३७ ॥

शतानन्दः । राजर्षे मा विषीदस्व । पाणिप्रणयिनं कोदण्डदण्डं प्रसादीकुर्वतः पार्वतीपतेर्विवोढा कः सीताया अभिमत इति न जानीमः । इदं तु प्रतिजानीमहे यदुत न प्रचण्डदोःखण्डोऽपि दशकण्ठः श्रीकण्ठमनीषितमपरथा प्रस्थापयिष्यति । तदेहि दुर्वृत्तमपि मुनिपुत्रमुचितेन संभावयाव इत्युत्थाय परिक्रामतः ।

जनकः । पुरोऽवलोक्य । दिष्ट्या दृष्टपुलस्त्यप्रसवाः प्रमोदामहे । लङ्केश्वर इतइतो भवानिदमासनमास्यताम् । सर्वे यथोचितमुपविशन्ति ।

शतानन्दः । ऋषिपुत्रको दिव्यश्चासि तत्कतमामातिथेयीं कुर्मः ।

महोक्षो वा महाजो वा श्रोत्रियाय विशस्यते ।
निवेद्यते तु दिव्याय स्रक्सुगन्धिनिधिर्विधिः ॥ ३८॥

रावणः । ब्रह्मर्षे इयमस्माकमातिथेयी ।

यत् पार्वतीहठकुचग्रहणप्रवीणे
पाणौ स्थितं पुरभिदः शरदां सहस्रम् ।
*गीर्वाणसारकणनिर्मितगात्रमत्र
तन्मैथिलीक्रयधनं धनुराविरस्तु ॥ ३९ ॥

प्रहस्तकः । आविरस्तु सममगर्भसंभवया सीतया ।

रावणः । सप्रत्याशं स्वगतं च ।

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल ।
विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्तां द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥ ४० ॥

शतानन्दः । इदमाविर्भवति दशानन माहेश्वरं धनुः ।

रावणः । स्वात्मानं प्रतीदमाविर्भवति माहेश्वरं धनुर्न पुनरद्यापि मान्मथम् ।

शतानन्दः । सहेलमालोक्य ।

स्फूर्जद्वज्राहतसुरगिरिस्वर्णचूर्णच्छटाभि-
स्तुल्योल्लासैस्त्रिभुवनदृशां दत्तदौस्थित्यमुद्रः ।
आशारन्ध्राण्ययमविरतं रुद्रकोदण्डदण्डः
स्वेच्छाचण्डो रचयति रुचां पञ्जरैः पिञ्जराणि ॥ ४१ ॥

नेपथ्यं प्रति कः कोऽत्रभोः सौविदल्लेषु कन्यान्तःपुरादागच्छतु जनकराजकन्या । नेपथ्ये इयमियम् । ततः प्रविशति सीता सख्यौ च ।

सीता । ससाध्वसोल्लासम् । अम्महे रक्खसो त्ति सुणिअ सच्चं सज्झसकोदूहलाणं अन्तरे वट्टामि * ।

एका । भट्टिदारिए । रक्खसोत्ति मा णं परिहव रक्खस-चक्कवट्टीक्खु एसो † ।

सीता । अहिअदरं उव्वेअणिज्जो ‡ ।

द्वितीया । अह किं मन्तेध किं कादुं इध आअदो § ।

प्रथमा । सङ्करसरासणं समारोइदुं ‖ ।

द्वितीया । णं एव्वं भण भट्टिदारिअं परिणेदुं ¶ ।

प्रथमा । अयि उड्डामरसीले कहं पुण असङ्करो अलद्धसङ्क-रप्पसादो वा इमं चावमारोवइस्सदि ** ।

सीता । स्वगतम् । अम्महे ऊससिदह्मि अणब्भवरिसेण पिअसहीवअणेण †† ।

सर्वाः परिक्रामन्ति ।

सीता । पुरोऽवलोक्य । एक्कासणोववेसिणो कदि उण एदे जणा ‡‡ ।

सख्यौ । णं एक्को एव्व एसो दसमुहो विंसदिभुअदण्डो अ §§ ।

---

* अहो राक्षस इति श्रुत्वा सत्यं साध्वसकौतूहलयोरन्तरे वर्ते ।

† भर्तृदारिके राक्षस इति मैनं परिभव राक्षसचक्रवर्ती खल्वेषः ।

‡ अधिकतरमुद्वेजनीयः ।

§ अथ किं मन्त्रयथः किं कर्तुमिहागतः ।

‖ शङ्करशरासनंसमारोपयितुम् ।

¶ नन्वेवं भण भर्तृदारिकां परिणेतुम् ।

** अयि उड्डामरशीले कथं पुनरशङ्करो ऽलब्धशङ्करप्रसादो वेमं चापमारोपयिष्यति ।

†† अहो उच्छ्वसितास्मि अनभ्रवर्षेण प्रियसखीवचनेन ।

‡‡ एकासनोपवेशिनः कति पुनरेते जनाः ।

§§ नन्वेक एवैष दशमुखो विंशतिभुजदण्डश्च ।

सीता । तादसदानन्दमिस्साणं अन्तरे उवविसिस्सम् * ।

रावणः । सौत्सुक्यमवलोक्य स्वगतम् । अहो त्रिभुवनातिशायि मकरध्वजसञ्जीवनं रामणीयकमस्याः । तथाहि ।

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमद्युतिः ।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥४२॥

किंच बहुष्वपि निजेषु कर्मसु विवेके कर्त्रे किंचिदेव रोचते । यतः ।

एतां यथाहृदयवर्तनमायताक्षीं
संसारसारनिचयेन विधाय वेधाः ।
शङ्के दिदेश मदनं परिरक्षितार-
मारात् स मां किरति येन शरैः शितायैः ॥ ४३ ॥

शतानन्दः । पुलस्त्यनन्दनेदं तद्धनुरियं सा सीता ।

रावणः । इदं तद्धनुरयं स रावणः । किं पुनरसंभावनागर्भमदशकण्ठोचितं व्याहरसि । पश्य ।

सार्द्धं हरेण हरवल्लभया च देव्या
हेरम्बषण्मुखवृषप्रमथावकीर्णम् ।
कैलासमुद्धृतवतो दशकन्धरस्य
कैषा जरद्धनुषि दुर्मददोःपरीक्षा ॥ ४४ ॥

प्रहस्तकः । स्वगतम् । इदं शिपिविष्टान्यस्माददृष्टगुणारोपणकर्म कार्मुकम् । कथमेतत् । विचिन्त्य पराक्रमपरीक्षायां को वा महादेवोऽपि देवस्य किंच ।

---

* तातशतानन्दमिश्राणामन्तरे उपवेक्ष्यामि ।

क्षतं सुराणां सारेण स्थाणवीयमिदं धनुः ।
किङ्करास्ते च देवस्य सुकरा रोपणक्रिया ॥ ४५ ॥

रावणः । सरोषं धनुरादाय ।

अस्मद्दोर्दण्डचण्डाऽऽस्वननिबिडगुणग्रन्थिभुग्नोभयाग्र-
व्यग्रीभावोद्भवपृष्ठत्रुटदनणुरणत्कर्मणः कार्मुकस्य ।
कल्पान्तोद्भ्रान्तभर्गप्रहतडमरुकोड्डामरध्वानधीर-
ष्टाङ्कारस्तारतारस्त्रिदशनिशमिता व्योमरन्ध्रं रुणद्धु ॥ ४६ ॥

शतानन्दः । अपवार्य । अहो लङ्कापतेरपूर्वो गर्वगरिमा यन्ममापि शतानन्दस्य न निश्चिनुते चेतः किं भवितेति । दुरारोपमैन्दुशेखरं धनुर्दुर्निवारा रावणभुजदण्डाः ।

जनकः । स्वगतम् । भगवन् भर्ग सन्निधत्स्व निजे धनुषि यथा जनककुलालङ्करणं भवति मे वत्सा । जितत्रिजगतापि जामात्रा वयमपत्रपामहे ।

सीता । आत्मगतं सप्रणामम् । अम्ब वसुन्धरे पसीद सीदा विण्णवेदि पढमं मे अन्तरं देज्ज पच्छा रावणो धनुं आरोविज्जदु * ।

सख्यौ । आकाशे भगवं अणङ्ग णमो दे माक्खु रक्खसं उद्दिसिअ सुउमारजणजोग्गं पहरणं संधिहिसि † ।

प्रहस्तकः । सगर्वम् । हन्त न सर्वदा सर्वस्य सदृशी दशापाकः । यतः ।

---

* अम्ब वसुन्धरे प्रसीद सीता विज्ञापयति प्रथमं मे अन्तरं देहि पश्चाद्रावणो धनुरारोपयतु ।

† भगवन्ननङ्ग नमस्ते मा खलु राक्षसमुद्दिश्य सुकुमारजनयोग्यं प्रहरणं संदधासि ।

वामो बाहुर्मृडान्याः करकलितरणत्कङ्कणालीकरालो
यस्मिन्सव्यश्च शम्भोर्भुजगवलयवान् सद्यमाकर्षणं तत् ।
कैलासोद्धारधीरं दशवदनभुजामण्डलीयन्त्रबन्धं
रेरे कोदण्डदण्ड प्रतिपत तदलं नासि सोढा वृढो ऽपि ॥४७॥

विचिन्त्य भवतु पातालचरानम्बरचरांश्च सावधानान्विधास्ये । अधो ऽवलोक्य ।

पृथ्वि स्थिरा भव भुजङ्गम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥ ४८ ॥

ऊर्ध्वमवलोक्य ।

अश्वान् विश्वासयैतान् तपनरुण कुरु स्वर्गमातङ्गकण्ठं
गाढोद्ग्रन्थिमाधोरण विबुधगणाः कर्णयोर्दत्त हस्तान् ।
लङ्केन्द्रोदग्रपाणिप्रणयिभवधनुर्भङ्गजन्मा कठोर-
ष्टाङ्कारः स्वर्गरोदःकुहरवलयितस्त्रासकारी न कस्य ॥ ४९ ॥

रावणः । अहो मम दशाननस्याज्ञा यदमीषां स्वावयवानामपि जितगगनचाटुकारः सर्वत्र व्यापारः । तथाहि संप्रत्येव तावत् ।

निष्पर्यायनिवेशपेशलरसैरन्योन्यनिर्भर्त्सिभि-
र्हस्ताग्रैर्युगपन्निपत्य दशभिर्वामैर्धृतं कार्मुकम् ।
सव्यानां पुनरप्रथीयसि विधावस्मिन् गुणारोपणे
मत्सेवाविदुषामहंप्रथमिका काप्यम्बरे वर्त्तते ॥ ५० ॥

विचिन्त्य । सजुगुप्सानुतापम् । अविमृश्यकारिता हि पुंसः

परं परिभवस्थानं यत्प्राकृतवदप्राकृतो ऽपि रावणः पणेन परिणे-तुकामः । तत्सर्वथा किमनेन ।

रुद्राद्रेस्तुलनं स्वकण्ठविपिनच्छेदो हरेर्वासनं
कारावेश्मनि पुष्पकापहरणं यस्येदृशाः केलयः ।
सो ऽहं दुर्मदबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा घुणजर्जरेण धनुषा कृष्टेन भग्नेन वा ॥ ५१ ॥

इति सावज्ञं क्षिपति ।

सख्यौ । भट्टिदारिए दिट्ठिआ वड्ढसे समं दे पाणिग्गहणमङ्गलेण मुक्कं रावणेण धणू * ।

सीता । साश्वासमात्मगतम् । हिअअ अणुऊलो विअ दे देवो वम्महो अ † ।

शतानन्दः । भो लङ्केश्वर परममाहेश्वरो ऽसि तत्किमिदमसंस्तुतं प्रस्तुतम् ।

जनकः । ससंरम्भमुत्थाय ।

न ब्रह्मोपनिषद्विवेचनरतिर्नो याज्ञवल्क्यो गुरुः
कोपावेशनविस्मसा च सहसा शक्नोति रोद्धुं मनः ।
दृष्ट्वा शम्भुमहाधनुःपरिभवं पाणिर्जराजर्जर-
स्तेनाभ्युत्सहते ममैष युगपच्चापाय शापाय च ॥ ५२ ॥

विमृश्य नेपथ्यं प्रति कः को ऽत्रभोः । धनुर्धनुः । प्रविश्य धनुरुपनीय निष्क्रान्तः पुरुषः ।

जनकः । परिकरं बद्ध्वा गृह्णाति ।

---

* भर्तृदारिके दिष्ट्या वर्धसे समं ते पाणिग्रहणमङ्गलेन मुक्तं रावणेन धनुः ।

† हृदय अनुकूल इव ते देवो मन्मथश्च ।

रावणः । सक्रोपहासम् ।

हस्तालम्बितमक्षसूत्रवलयं कर्णावतंसीकृतं
स्रस्तं भ्रूयुगमुन्नमय्य रचितं यज्ञोपवीतेन च ।
संवृत्ता जघने च वल्कलपटी पाणिश्च धत्ते धनु-
र्दृष्टं भो जनकस्य योगिन इदं दान्तं विरक्तं मनः ॥ ५३ ॥

शतानन्दः । आश्चर्यम् । अहो महाप्रभावो मे याज्यः । अस्य हि ।

वाञ्छानुगौ न जरसा जनकस्य पाणी
सत्यं स एव तपसस्तु परः प्रकर्षः ।
मौर्वी स्वयं यदधिरोहति चापकोटिं
संधानकर्मणि शराश्च यदुत्सहन्ते ॥ ५४ ॥

सीता । हद्धिहद्धि । तादोवि णाम उवसमेक्कधणो धणुव्वावारेदि स एष हुदवहं वरिसिदुकामो मिअङ्कमणी * ।

प्रहस्तकः । आः क्षत्रियबन्धो वृथावृद्ध दशाननमुद्दिश्य धनुरारोपयसि नन्वेष ते पौलस्त्यशस्त्रं चन्द्रहासः शिक्षयिता ।

रावणः । उच्चैर्विहस्य सोत्प्रासम् ।

घुणव्रणनभङ्गुरं पशुपतेः पुराणं धनु-
र्निरीक्ष्य भुजमण्डलीबलमदाद्विकीर्णं मया ।
स एष न तितिक्षते समरसीम्नि सीरध्वजः
समं हसत हे मुखान्यसममेतदुद्घट्टनम् ॥ ५५ ॥

जनकः । पुलस्त्यपुत्र संवृणु शस्त्रं एव ते परममाहेश्वरः सीरध्वजो न क्षमते ।

---

* हा धिक् हा धिक् तातो ऽपि नामोपशमैकधनो धनुर्व्यापारयति स एष हुतवहं वर्षितुकामो मृगाङ्कमणिः ।

रावणः । अहो सीतास्नेहो मामार्द्रयति यदहमपि दशकण्ठ ईदृशानां वचसां सोढा । ससंरम्भम् ।

यज्वा जरापरिणतः श्वशुरो भविष्यन्
ब्रह्मैकतानहृदयो गुणवांस्तथेति ।
क्षान्तेर्निमित्तमिदमत्र ममैकमेकं
हे पाणयः किमिति वाञ्छथ चन्द्रहासम् ॥ ५६ ॥

जनकः । रावण इतो भव एष प्रहरायसे । नेपथ्ये ।

जनक विरम रोषात् त्वं हि संन्यस्तशस्त्रः
कथमयमुपरागस्त्वद्गुरुर्याज्ञवल्क्यः ।
परिणतिपरिहीणक्षुद्रराजन्यजन्यं
तदिह शरनिवेशं संवृणु व्रीडिताः स्मः ॥ ५७ ॥

जनकः । वत्स शुनःशेप यदात्थ इदमपास्तं शस्त्रम् । तथाकृत्वा तज्जगतामपरागसत्त्वायेदं शापोदकमुत्सृजामीति कमण्डलुमादत्ते ।

शतानन्दः । भगवतो वैकर्त्तनादागतस्य निरवधिसीम्नो ब्रह्मतत्त्वोपलम्भस्य तपोराशेश्च किमयं व्ययः क्रियत इति शापोदकमुपसंहरेति ।

जनकः । भगवन् । विश्वामित्रधर्मपुत्र कुलगुरो गौतम ।

कृते राक्षसराजेन पिनाकस्य पराभवे ।
जानन्ति युक्तं गुरवो भवद्भिः पृष्टवानहम् ॥ ५८ ॥

रावणः । मिथिलेश्वर किमिति संरम्भसे । ननु रभसनिर्जितैरावणो रावणः खल्वहम् ।

मयि कण्ठपरिच्छेदपरितोषितशङ्करे
कुण्ठीभवन्ति सर्वेषामस्त्राणि च तपांसि च ॥ ५९ ॥

त्वं किल संबन्धज्येष्ठो ब्रह्मविद्यावरिष्ठ इति च मया गम्यते ।

सख्यौ । अप्रवार्य हदास दे वअणं जणअकुलदेवदाओ पडिहणन्तु * ।

शतानन्दः । निशाचरचक्रवर्त्तिन् मा वृथा विकत्थस्व । वक्रीकृतचण्डीशचापदण्डस्य शोभत एष व्याहारो न पुनस्तव ।

रावणः । सक्रोधम् । किंकिमाह भवान् । निशाचरचक्रवर्तिन् मा वृथा विकत्थस्वेत्यादि पूर्वोक्तमनुवदति । विचिन्त्य तत्किमत्र साम्प्रतम् ।

परिषदियमृषीणामेष वृद्धो नरेन्द्रः
कथमथ तदमुष्मिन् मैथिलीलालसोऽपि ।
निजभुजबलदृप्यद्वीरवर्ये समाजे
हठहरणविनोदं राक्षसेन्द्रः करोतु ॥ ६० ॥

ससंरम्भम् । शृणुत भोः शृणुत निशाचरपतेः प्रतिज्ञाम् ।

कुर्वन् मौर्वीनिवेशक्रमनमदटनि स्पष्टटङ्कारटङ्कं
शम्भोः कोदण्डदण्डं बधिरितभुवनं भूर्भुवःस्वस्त्रयेऽपि ।
यस्तामेनां वरीता रसयति तदसृक् चन्द्रहासो ममासिः
कण्ठास्थिग्रन्थिशङ्कीकरणभवरणत्काररवाचालधारः ॥ ६१ ॥

नेपथ्ये कलकलः ।

रावणः । भोः प्रहस्त किमयमकाण्डचण्डो विस्तीर्णजलधरध्वानतानवङ्गदेव निर्घोषः ।

प्रहस्तकः । देव देवमनुपततामस्मद्बलानामेष निर्भरभरितभुवनाभोगतलः कलकलः ।

---

* हताश ते वचनं जनककुलदेवताः प्रतिघ्नन्तु ।

नेपथ्ये वैतालिकः । जयजय त्रिजगत्पते पौलस्त्य सुखाय माध्यंदिनी संध्या भवतु देवस्य संप्रति हि ।

शीतं श्रीखण्डकाण्डं निबिडयति फणी भोगनालेन लीन-
श्छायाद्रुतस्य मूले रचयति चमरी रम्यरोमन्थलीलाम्
सेर्ष्यान्तर्मानुषीयं वितरति कमितुर्घर्मितस्याङ्कपालीं ।
लीलाकस्तुरिकैणी सरति विचरितुं सारणीग्रन्थिपर्णाम् ॥ ६२ ॥

रावणः । तद्वयमपि निसर्गरमणीयेषु मिथिलापुरीपरीसराक्रीडेषु क्रीडाभिर्द्वित्राणि दिनान्यात्मानं विनोदयामस्तादादिश्यन्तां सेनापतयः ।

ताम्बूलीनद्धमुग्धक्रमुकतरुतलप्रस्तरे सानुगाभिः
पायंपायं कलावीकृतकदलदलं नारिकेलीफलाम्भः ।
सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि
र्दात्यूह * व्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ॥६३॥

इति निष्क्रान्ताः सर्वे ।

॥ प्रतिज्ञापौलस्त्यो नाम प्रथमोऽङ्कः ॥

---

* दात्यूहः कोकिलजातिः ।

---

## ॥ अथ द्वितीयोऽङ्कः ॥

अतः परं परशुरामरावणीयो भविष्यति ।

ततः प्रविशति भृङ्गिरिटिः ।

भृङ्गिरिटिः । सपरिक्रममात्मानं निर्वर्ण्य । अये विक्रतरूपतापि क्वचिन्महते ऽभ्युदयाय यतः ।

स्नायुप्रायनिबद्धकीकसतनुं नृत्यन्तमालोक्य मां
चामुण्डाकरतालकुट्टितलयं वृत्ते विवाहोत्सवे ।
ह्रीमुद्रामपनुद्य यद्विहसितं देव्या समं शम्भुना
तेनाद्यापि मयि प्रभुः स जगतामास्ते प्रसादोन्मुखः * ॥ १ ॥

पुनर्निरूप्य सोपहासम् । अहो त्रिभुवनाधिपतेरनुचरस्य महार्हवेषता ।

कौपीनाच्छादनं वल्कमक्षसूत्रं † जटासटाः ।
रुद्राक्षुशस्त्रिपुण्ड्रं च वेषो भृङ्गिरिटेरयम् ॥ २ ॥

विचिन्त्य भृङ्गिरिटिस्वामिनो वा कीदृशो वेषविशेषः ।

दिगम्बरो वहति भुजङ्गभूषणं
कपालवान् कलयति दाम कौणपम् ।
वृषप्रियो रचयति भस्मगुण्ठना-
मुमापतेश्चरितमचिन्त्यकारणम् ॥ ३ ॥

यद्वा यस्य लैङ्गोद्भवं भैरवीयं तौम्बुरवमौमापतमार्द्धनारीश्वरमैन्दुशेखरमन्तकान्तकरं कालकूटीयं जम्भारिभुजस्तम्भनं द्वलमखोन्माथि मान्मथं त्रैपुरमन्धकासुरीयमित्यपरमप्यपरिमेयं चित्रं चरित्रजातमाचक्षते । तस्य भगवतश्चेष्टापरीक्षायां को नाम परमेष्ठिवैकुण्ठावपि । किं पुनर्भृङ्गिरिटिः । तथा हि ।

---

* स्नायुप्रायाणि स्नायुप्रचुराणि निबद्धानि कीकसान्यस्थीनि यस्यामेतादृशी तनुर्यस्य । एतेन भृङ्गिरिटेर्विकृतरूपता सूचिता । अतो विवाहोत्सवे प्रवृत्ते शम्भुना सह भगवती देवी लज्जामुद्रां विहाय विकृतरूपिणं नृत्यन्तं भृङ्गिरिटिं दृष्ट्वा यज्जहास तेन भगवान् शिवो न केवलं तदानीमेव तस्मिन् तुष्टः किन्तु सोऽद्यापि तस्मिन् तुष्ट एव । महात्मानो हि येन केनापि कारणेन यस्मिन्नेकवारं संतुष्टास्तस्मिन् सर्वदा प्रसादोन्मुखास्तिष्ठन्तीति भावः ।

† अक्षसूत्रं रुद्राक्षमाला ।

नग्नस्तिष्ठति तं नमन्ति विबुधाः संवीतदिव्यांशुकाः
प्रीतो याति वृषेण वारणगतस्तं वासवः सेवते ।
भूषा तस्य नृणां कपालशकलाः स्तोता धनेशः स्वयं
दौर्गत्यस्य परं पदं स भगवान् शम्भुर्विभुत्वस्य च ॥ ४ ॥

तत्किमनेन यथादिष्टमनुतिष्ठामि। परिक्रम्यावलोक्य च।
अये नारदः । कलहकुतूहली खल्वेष मुनिः यद्वा ।

लिङ्गोद्भवव्यतिकरे स्वमहत्वहेतो-
र्नारायणद्रुहिणयोरुदभूद्विवादः ।
यस्मादयं कलिमुखो मुनिराविरासीत्
तन्मा कथं नु भवतु प्रियसंप्रहारः * ॥ ५ ॥

विचिन्त्य । भवत्वस्मादेव तर्हि तयोरुदन्तमुपलप्स्य इति परिक्रामति । ततः प्रविशति यथा निर्दिष्टो नारदः ।

नारदः । विचिन्त्य सत्यंसत्यमिदं गीयते दुस्त्यजा प्रकृतिरिति । यतः ।

युयुधे युद्ध्यते को वा योत्स्यते वा मदोद्धतः ।
इति मे व्यग्रमनसः कालो ऽभ्येति च याति च ॥ ६ ॥

अपिच ।

स्रस्तान्त्रतन्त्रतुरगाणि कृपाणघात-
घूर्णत्करीण्यनणुपूतनफूत्कृतानि ।

---

* यस्मादयं कलिमुखो मुनिराविर्भूतस्तस्मात् कथं नु प्रियसंप्रहारः प्रियविनाशो मा भवत्वपित्ववश्यं भवत्विति भावः ।

धावत्कदम्बकटुताण्डवडामराणि
द्रष्टुं रणान्यहरहस्त्रिजगद्भ्रमामि * ॥ ७ ॥

विमृश्य यो यत्रानुरक्तः स तदन्यतिरस्कारेण तदेव बहु मन्यते । तथाहि ।

तन्मम ब्रह्म परमं तत्तपः सा क्रतुक्रिया ।
स स्वाध्यायः स च जपो यद्वीक्ष्ये युद्धमद्भुतम् ॥ ८ ॥

येन केन चिद्व्यसनिनो जनस्य तदसन्निधाने तत्प्रतिनिधिरपि विनोदाय । तथाचाहम् ।

अलाभे वीरयुद्धस्य नखवादनसंभृतम् ।
सापत्न्यकलिं स्त्रीणां पश्यामि च शृणोमि च ॥ ९ ॥

किंच ।

लावकतित्तिरिकुक्कुटमेषैर्महिषैश्च या रणक्रीडाः ।
द्रुहिणाच्युतकलियोनेस्ताः प्रीत्यै नारदस्य मुनेः ॥ १० ॥

अपिच ।

वीराणां शस्त्रसंस्फोटे करिणां दन्तघट्टने ।
व्याघ्राणां नखनिर्भेदे नारदः परितुष्यति ॥ ११ ॥

आत्मानं निर्दिशन् । अपिच ।

---

* स्रस्तानि गलितान्यन्त्रतन्त्राणि प्रधानान्त्राणि येषामेवंविधास्तुरगा येषु । कृपाणघातैर्घूर्णन्तो मूर्च्छापरवन्तः करिणो येषु । अनल्पान्युत्कटानि पूतनानां रणरुधिरपानोत्सुकदेवयोनिविशेषाणां फूत्कृतानि येषु । धावन्ति यानि कदम्बानि योद्धसमूहास्तेषां कटुना त्रासजनकेन ताण्डवेन डामराणि भयानकान्येवंविधानि रणानि द्रष्टुमहं नित्यं त्रिलोकीं पर्यटामि । एतेन सततमतिघोररणाभिकाङ्क्षी भगवान् नारद इति सूच्यते ।

यच्चारीतनुरच्युतः स भगवान् कन्दर्पदर्पापहो
यच्चाभृङ्गिरिटिः पतिश्च मरुतां यत्फेनपुञ्जायुधः ।
सौम्यं यच्च विमुच्य रूपमभवच्चण्डी हिमाद्रेः सुता
तत्सर्वं मम नारदस्य ललितं युद्धैकलीलारुचेः * ॥ १२ ॥

संप्रत्येवोपस्थितामिव मनोरथसिद्धिं पश्यामि यदावेदितमेतस्य † त्रयीविद्याशिष्येण माठरेण यथा याचितपरशुं दशग्रीवमाधूतधूर्जटिधनुषं चाभियोक्तुं मिथिलापुरीं प्रस्थितो राम इति । विचिन्त्य तदहमपि तत्र गत्वा तयो ‡ रमर्षवृद्धिविधिना मनोरथानामप्यपथं समरसंभारमालोकयामि । इति परिक्रामति ।

भृङ्गिरिटिः । वेगात्कतिचित्पदानि गत्वा स्वागतं देवर्षेर्नारदस्य ।

नारदः । कथं महादेवानुचरो भृङ्गिरिटिः । उपसृत्य स्वस्ति भृङ्गिरिटये । क्व पुनः प्रस्थीयते ।

भृङ्गिरिटिः । यत्र वीरवर्गवरिष्ठौ जामदग्न्यदशकण्ठौ ।

नारदः । प्रमथप्रथम साधु स्मारितोऽस्मि । तत्कथय कः पुनर्जामदग्न्यदशग्रीवयोर्वीरव्रतचर्यासु प्रकृष्यते ।

भृङ्गिरिटिः । देवर्षे महदन्तरं रामरावणयोर्वीरव्रतचर्यां प्रति पश्य ।

त्रिःसप्तावधि बाधिता क्षितिभुजामाजन्मवैखानसः
कर्तामातृवधैनसः स सकलश्रुत्यर्थवीथीगुरुः ।
विश्वस्याश्च भुवः कृतौ वितरिता श्यामाकमुष्टिंपचो
रामः सोमसुदप्रमेयमहिमा कासां गिरां गोचरः ॥ १३ ॥

---

* एतास्तिस्रः कथाः श्रीमद्भागवतादौ प्रसिद्धाः ।

† एतस्य जामदग्न्यस्य ।

‡ तयोः जामदग्न्यदशग्रीवयोः ।

नारदः । चन्द्रशेखरसखे न रावणोऽपि वीरव्रतचर्यां प्रति केनाप्यतिसंधीयते । यतः ।

आसीदस्ति भविष्यति क्वचिदपि त्रैलोक्यमालोक्यतां
यद्येतस्य दशाननस्य सदृशो दिव्या हि युष्मदृशः ।
तुल्यं कृत्स्नशिरश्छिदः कृतनुतेः स्तोकत्रिलोकीप्रदो
यस्मात्सोऽपि वरप्रदानसमये देवः शिवो लज्जितः * ॥१४॥

भृङ्गिरिटिः । देवर्षे नारद वृथा समर्थयसे । तथाहि ।

एकः कैलासमद्रिं करगतमकरोच्चिच्छिदे क्रौञ्चमन्यो
लङ्कामेकः कुबेरादहृत वसतये कोङ्कणानब्धितोऽन्यः ।
एकः शक्रस्य जेता समिति भगवतः कार्त्तिकेयस्य चान्य-
स्तत् कामं कर्मसाम्यात्किमपरमनयोर्मध्यगा वीरलक्ष्मीः ॥१५॥

नारदः । सहर्षं हस्तमुद्यम्य ।

चित्रं नेत्ररसायनं त्रिदशतासिद्धेर्महामङ्गलं
मोक्षद्वारमपावृतं मम मनःप्रह्लादनाभेषजम् ।
साकं नाकपुरन्ध्रिभिर्नवपतिप्राप्त्युत्सुकाभिः सुराः
सर्वे पश्यत रामरावणरणं वत्स्येष वो नारदः ॥ १६ ॥

भृङ्गिरिटिः । युद्धैकरुचे मा निर्भरं संरम्भस्व । त्वन्मनोरथपरिपन्थी हि देवादेशः । यद्देवोऽस्मि स्वचापतिरस्कारमप्यविगणय्य रुचीकपुलस्त्यसहितस्तयोरन्योन्यमन्युग्रन्थिश्लथीकरणाय प्रेषितः ।

---

* एककालावच्छेदेन सकलमस्तकच्छेदकृत् स्तोता चायं दशग्रीव इति कथमहमभीष्टवरदोऽपि तुच्छां त्रिलोकीं दास्यामीति वरप्रदानसमये भगवान् शिवोऽपि ललज्जे । एवंविधो दशग्रीवोऽपि कासां गिरां गोचरो न कासामित्यर्थः ।

नारदः । सविषादमात्मगतम् । धिक्कष्टमुत्थितश्च कौतुकद्रुमाङ्कुरो झटिति त्रुटितश्च तदन्तरितं तावदिदं रामरावणीयं युद्धमयोध्यां गत्वा परं रामरावणीयं योजयिष्यामि संप्रत्येवोभयरामीयं वा । प्रकाशम् । भूर्भुवःस्वस्त्रितयवासिभिरप्यनुल्लङ्घनीयो देवादेशः । तदहं ब्रह्मणः सदनं प्रति तावद्यास्यामि ।

भृङ्गिरिटिः । अहमपि प्रस्तुतकार्यसिद्धय इति निष्क्रान्तौ ।

शुद्धविष्कम्भकः * ।

ततः प्रविशति रावणः प्रतीहारी च ।

रावणः । सीतामनुसंधाय ।

तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा
सा दृष्टिर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु ।
सा चेत्कान्तिरतन्त्र † मेवकनकं किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ १० ॥

प्रतीहारी । स्वगतम् । कहं अज्जवि सच्चेअ चित्तभित्ती तंचेअ चित्तअम्म ता गाढमभिणिविट्ठो दसाणणो कामो ता

---

* भूतभविष्यत्कालिककथांशानां निदर्शकः संक्षिप्तार्थो योऽङ्कस्य प्रारम्भे रचनाविशेषः स विष्कम्भक इत्युच्यते । स च द्विधा शुद्धः संकीर्णश्च तत्र मध्यमेन मध्यमाभ्यां वा पात्राभ्यां यः प्रयोजितः स शुद्धो यो हि नीचमध्यमपात्रकल्पितः स संकीर्णः । तथाच साहित्यदर्पणे ।

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात् स तु संकीर्णो नीचमध्यमकल्पितः ॥

† अतन्त्रमप्रधानं तुच्छमित्यर्थः ।

मरणे सद्दमरणपक्खवादो एत्थ वित्थरइ । आकाशे । हंहो विसमबाण जुत्तमिणं सरिसमिणं जं दाणिं एदहमेत्तेवि दसाणणपसादे ईदिसो दे पुरन्दरपक्खवादो जेण सअलजणणिन्दणिज्जेण इमिणा उभअवेदणत्तणेणावि ण लज्जीअदि । भोदु कज्जं कज्जन्तरमन्तरेदि ता एव्वं दाव । प्रकाशम् । देव मात्रामओ दुवारदेसे चिट्ठदि * ।

रावणः । अनाकर्ण्य भोभो मदन अति हि नाम दुर्ललितो ऽसि यत्मय्यपि प्रहरसि यद्वा ।

अपि प्रहर्त्ता मम वल्लभो ऽसि
मृगाङ्कबन्धो निखिलामरेषु ।
यैर्व्यापृतस्त्वं मयि रावणे ऽपि
तैरेव बाणैर्यदि तां प्रति स्याः ॥ १८ ॥

प्रतीहारी । पूर्वोक्तमभिधत्ते ।

रावणः । हन्तहन्त नैकप्रकारो मदनव्यापारः । यतो मम वैदेहीदर्शनतः प्रभृति ।

न्यञ्चत्कुञ्चितमुन्मुखं हसितवत्साकूतमाकेकरं
व्यावृत्तं प्रसरत्प्रसादि मुकुलं सत्प्रेम कंप्रं स्थिरम् ।

---

* कथमद्यापि सैव चित्रभित्तिस्तदेव चित्रकर्म तद्गाढमभिनिविष्टो दशानने कामस्तन्मन्ये शतमन्युपक्षपातो ऽत्र विस्तार्यते । हंहो विषमबाण युक्तमिदं सदृशमिदं यदिदानीमेतावन्मात्रे ऽपि दशाननप्रसादे ईदृशस्ते पुरन्दरपक्षपातो येन सकलजननिन्दनीयेनानेनोभयवेदनत्वेनापि न लज्ज्यते । भवतु कार्यं कार्यान्तरमन्तरयति तदेवं तावत् देव मायामयो द्वारोद्देशे तिष्ठति ।

उद्भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गाकुलं
चक्षुः साश्रु च वर्त्तते रसवशादेकैकमन्यक्रियम् * ॥ १९ ॥

प्रतीहारी । स्वगतम् । सव्वधा मन्दोदरीमन्दीकिदसिणेहगण्ठिणो से सीदामआ उल्लावा । विचिन्त्य । ता भोदु णिसग्गदुस्सहेण से परसुरामणामग्गहणेण सिढिलेमि सीदावेसं । प्रकाशम् । णं विण्णवेमि परसुरामपासपडिणिअत्तो † इत्यर्धोक्ते ।

रावणः । मायामयस्तच्छीघ्रं प्रविशतु ।

प्रविश्य मायामयः । देव मायामय इतो दृष्टिदानेनानुग्राह्यः ।

रावणः । अथ याचितपरशुना परशुरामेण किमभिहितमासीत् ।

मायामयः । त्रैलोक्यमाणिक्य रामोदन्तमाकर्णयतु स्वामी ।
पौलस्त्यः प्रणयेन याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति ।
लङ्काध्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥ २० ॥

रावणः । कदा नु खलु परशुरामो रसातलत्रिदिवयोर्जेता दाता च संवृतः । रावणः पुनः प्रतिग्रहीता । ततस्त्वया किमसौ प्रत्युक्तः ॥

मायामयः । नक्तंचरचक्रवर्तिन् इदमिदं निवेद्यते ।

---

* मदनव्यापारेण रावणस्याक्षिविंशत्या एकैकमक्षि न्यञ्चत् कुञ्चदित्यादिविविधप्रकारकमभूदित्यर्थः ।

† सर्वथा मन्दोदरीमन्दीकृतस्नेहग्रन्थेरस्य सीतामया उल्लापास्तद्भवतु निसर्गदुःसहेनास्य परशुरामनामग्रहणेन शिथिलयामि सीतावेशम् । ननु विज्ञापयामि परशुरामपार्श्वप्रतिनिवृत्तः ।

देवो यद्यपि ते गुरुः स भगवान् खण्डेन्दुचूडामणिः
क्षोणीमण्डलमेकविंशतिमिदं वारान् जितं यद्यपि ।
द्रष्टव्यो ऽस्यमुमेव भार्गवबटो कण्ठे कुठारं वहन्
पौलस्त्यस्य पुरस्तथापि रचितप्रत्ययसेवाञ्जलिः ॥ २१ ॥

रावणः । सप्रसादम् । कथमीदृशमनीदृशो ऽभिदधीत ततस्ततः ।

मायामयः । तूष्णीं तिष्ठति ।

रावणः । पराभिहितं हि भाषसे तन्निर्विशङ्कं निवेदय ।

मायामयः । देव प्रकृतिमुखरा हि ब्राह्मणजातिर्देवादेश इति निवेद्यते ।

परशुमिममदेयं याचते युद्धहेतो-
र्गिरिशधनुरधिज्यं कर्तुमुत्कण्ठते च ।
तदिदमभिदधीथास्त्वं प्रवाचं पिशाचं
तव भुजतरुखण्डं मत्कुठारो न सोढा ॥ २२ ॥

रावणः । सक्रोधहासम् । सूक्तं भद्रेण प्रकृतिमुखरा ब्राह्मणजातिरिति तदनुभविष्यति क्षुद्रक्षत्रियविजयदुःशिक्षितो मुनिखेट * श्चापलस्य फलम् ।

मायामयः । अस्तमितान्यविक्रमगतीनि जगन्ति त्रीण्यपि मन्वानो नितरां दृप्यति ब्रह्मवीरः ।

रावणः । कतरदधिष्ठानमध्यास्ते स ते ब्रह्मवीरः ।

मायामयः । स्वगतम् । सकोपग्रन्थिरिवास्मत्स्वामी भवतु न प्राणनिर्याणे ऽप्यनुचितवाचो भवन्ति भृत्याः प्रकाशम् ।

---

* मुनिखेटो मुन्यपसदः ।

निःशेषं काश्यपाय क्रतुविधिगुरवे दक्षिणीकृत्य पृथ्वीं
काण्डैर्ज्योतिःशिखण्डैर्मधुरिपुशयने व्यस्तवान् वारि येभ्यः ।
तानेलानालिकेरीक्रमुकफलिलताराजरम्भावनान्ता-
नम्भोधेर्गर्भभागानधिवसति मुनिर्भार्गवो भर्गशिष्यः ॥ २३ ॥

रावणः । तर्हि मिथिलातः सिंहलानुत्तरेण लङ्कां साधयतः सन्निधीभविता ।

मायामयः । देव प्रकृतिरोषणो रेणुकापुत्रस्तमागतमुत्प्रेक्षे ।

रावणः । तत्प्रियंप्रियं नः । नेपथ्ये ।

स एष भृगुपुङ्गवो गिरिशबालशिष्यो मुनिः
परश्वधशिखाशुशुक्षणिहुताखिलक्षत्रियः ।
उपैति धृतमत्सरो गुरुशरासनन्यक्कृतेः
क्व नाम दशकन्धरो वहतु चन्द्रहासं करे ॥ २४ ॥

रावणः । अनाकर्णनमभिनीय । अपि न नर्मगर्भमभिधत्से ।

मायामयः । सत्यमेतत् ।

रावणः । स विनोदयिता मे कन्दर्पकण्डूलभुजदण्डमण्डलम् । नेपथ्ये पुनस्तदेव ।

मायामयः । ननु प्राप्त एवायमसावितः समहस्तास्फाल्यमानमार्जनामञ्जुमुरजनिनदनिष्यन्दसुन्दरेण रवेण निवेदितनिजागमनो जामदग्न्यः ।

ततः प्रविशति करेण शरमान्दोलयन्धृतधनुर्जामदग्न्यो माठरश्च ।

माठरः । स्वगतम् ।

अयमेव महाभागो भृग्वपत्यं यदस्य हि ।
यदेव ब्रह्म परमं स एव गिरिशो गुरुः ॥ २५ ॥

किंच अनाकलितसत्वसारसंभारभीषणरमणीयाकृतयो हि महात्मानः । तथाहि ।

वैखानसो मुनिवृषो प्रवरश्चवीर-
श्चित्रं चरित्रमिदमस्य मुदे भिये च ।
क्षीराम्बुधेरिव पयः सभुजङ्गराजं
मार्तण्डरूपमिव घर्मपरिप्लुतं च ॥ २६ ॥

विचिन्त्य । भवत्वेवं तावत् । प्रकाशम् । भगवन् भार्गव किमिदमपाकृतच्यवनादिवचःशृङ्खलाविसंष्ठुलमपक्रममुपक्रांतम् ।

जामदग्न्यः । सस्मरणमनाकर्ण्य । अहो मयि महान् खलु महेश्वरवल्लभायाः प्रसादः । कुतः ।

गोदानमङ्गलविधेरनु रेणुका यान्
केशानवर्द्धयत तातनिवारिता ऽपि ।
वेणीकृता मम जटापटलस्य हेतो-
स्ते कुन्तलाः स्वयमपास्य भवं भवान्या ॥ २७ ॥

माठरः । भगवन् भार्गवेत्यादि तदेवाभिधत्ते ।

जामदग्न्यः । महाब्राह्मण किमुच्यते यदनभिज्ञो ऽसि वीरव्रतचर्याक्रमस्य न च विन्दानस्य योगमार्गमसुप्रतिपदः परब्रह्मानन्दः । पश्यतु भवान् ।

सेर्ष्यं पश्यति षण्मुखे भगवती कोदण्डशिक्षाश्लथं
धम्मिल्लं विरचय्य चुम्बितवती यं वत्सला मूर्द्धनि ।
सोढा सो ऽपि हि भार्गवो गुरुधनुर्निर्भर्त्सनं रावणा-
दित्याकर्ण्य गणैर्वृतः स्मितमुखैरीशो ऽपि लज्जिष्यते ॥ २८ ॥

माठरः । शिष्यस्नेह एव मां मुखरयति । तदाचार्याः प्रमाणम् ।

जामदग्न्यः । स एष भृगुपुङ्गव इत्यादि पठति ।

रावणः । साधु भोः साधु सत्यमिन्दुशेखरशिष्यो ऽसि ।

वीरप्रसूर्जगति भार्गव रेणुकैव
या त्वां त्रिलोकतिलकं सुतमभ्यसूत ।
शङ्किभकुम्भतटखण्डनचण्डधारो
येनैष मे न गणितो युधि चन्द्रहासः ॥ २९ ॥

जामदग्न्यः । पुलस्त्यापत्य अयमस्माकमाकस्मिकवीरव्रतदायी विफलीकृतकृतान्तक्रोधहासः स ते चन्द्रहासः । येन शिपिविष्टपरितुष्टये स्वकण्ठकाण्डमण्डलीं द्विधा कृतवानसि ।

रावणः । आं जामदग्न्य स एवैष निसर्गकरालः करवालः येन सा मम भूर्भुवःस्वस्त्रयी पादपीठे लोठिता ।

जामदग्न्यः । लङ्केश्वर ईदृश एवायं चन्द्रहासः ।

दृष्टे मुखानामेतस्मिन्कण्ठखण्डनशङ्कया ।
स्वेषां च न परेषां च जायन्ते कम्पसंपदः ॥ ३० ॥

रावणः । भार्गवभार्गव मामेवं किं करवाम यदतिक्रान्ते वस्तुनि साक्षिप्रत्ययपरतन्त्रा व्यवहाराः । ततश्च ।

आस्कन्धावधि कण्ठकाण्डविपिने द्राक्चन्द्रहासासिना
छेत्तुं प्रक्रमिते मयैव टसितित्रुट्यच्छिरासंततौ ।
अस्मेरं गलिताश्रु गद्गदपदं भुग्नभ्रु वा यद्यभू-
द्वक्त्रेष्वेकमपि स्वयं स भगवांस्तन्मे प्रमाणं शिवः ॥ ३१ ॥

जामदग्न्यः । आत्मवधः प्रथमः पातकेषु । अनेनापि विकत्थस इत्यहो ते श्रुतिषु वैचक्षण्यं यदित्थमध्यगीष्महि ।

असुर्या इति ते लोका अन्धेन तमसा वृताः ।
तांस्ते मृत्वाभिगच्छन्ति ये के चात्महनो जनाः ॥ ३२ ॥

रावणः । आः क्षत्रियापुत्र ब्राह्मण इव मीमांसमानस्त्रिवेदीं विप्लावयसि । तदेष ते राजा रावणो दण्डधरः ।

जामदग्न्यः । विहस्य अहो वर्णाश्रमेषु वैशारद्यं राज्ञः । तदिदमध्याप्यसे ।

सकलस्यास्य लोकस्य जातिर्भवति मातृतः ।
ऋषीणां तु श्रुतिदृशां पितृतो धर्मनिर्णयः ॥ ३३ ॥

रावणः । यदात्थ एवमपि भवतु ।

जामदग्न्यः । किं पुनरैरम्मदे महसि न दारवीयं ज्योतिरस्तमयते । अतश्च ।

यः पाणिप्रणयात्पवित्रिततनुर्देवेन खट्वाङ्गिना
यः शस्त्रैकगुरुर्गजासुरवधूवैधव्यमुद्राप्रदः ।
तत्रास्मिन् परशौ शिताग्रहुतभुग्ज्वालाच्छटाडामरे
श्लिष्यन्तः सहसा व्रजन्ति विलयं ते चन्द्रहासादयः ॥ ३४ ॥

रावणः । विहस्य । अयमसौ चन्द्रहासस्य विलापयिता कुठारो यः खण्डैकभाग इत्यमाङ्गलिकत्वाद्भगवता भर्गेण भवते दत्तः । तत्तपस्यतस्ते महदुपकरणमासीत्समित्काण्डखण्डनाय ।

जामदग्न्यः । आं रावण स एवायं भगवतो भवानीवल्लभस्य प्रसादचिन्तकः परशुर्महदुपकरणं च मे तपस्यतः समित्काण्डखण्डनाय क्रुद्धतस्तु प्रचण्डदुर्वृत्तदण्डनाय ।

रावणः । जामदग्न्येदृश एवायं खण्डपरशुपाणौ परशुरासीत् । आधारनिबन्धनो यदाधेयस्य गुणाध्यारोपः । मुक्ताशुक्तिसंपुटपीतं हि पश्य पाथो ग्रन्थीभवति ।

जामदग्न्यः । निशाचरचक्रवर्त्तिन् न सार्वत्रिकमिदं सलिलगर्भगतोऽपि गभस्तिमाली दुरालोक एव । जामदग्न्यपाणिप्रणयवानपि हरपरश्वधो दुर्निषेध एव ।

रावणः । ओमिति ब्रूमः । यदि न दुर्निषेधः कथमिव रेणुकाशिरश्छेदेऽपि स्वच्छन्दः । अपिच रे ब्रह्मबन्धो ।

देवीविलासमुकुरः परशुर्य आसीत्
स्तम्बेरमासुरशिरोमणिशातधारः ।
तं रेणुकारुधिरपङ्कक्ताङ्कमेनं
द्रष्टुर्न कस्य हृदयं करुणा रुणद्धि ॥ ३५ ॥

विचिन्त्य । हंहो नीललोहितशिष्य नूतनः खल्वेष क्षत्रियधर्मो यत्र जननीजनेऽपि शौर्यपर्यवसायः । तथाप्याद्रियसे । अहो स्वतन्त्रा लोकयात्रा । यद्वा असतामपि महापुरुषशुश्रूषा किमपि कामदुघा । यतः ।

त्वं जामदग्न्य जननीवधपातकेन
न ब्रह्मवर्चसवतां सविधेऽभविष्यः ।
गीर्वाणवद्यचरणस्तव चन्द्रमौलि-
राचार्यकं स भगवान् यदि नाकरिष्यत् ॥ ३६ ॥

तथाप्येतदभिधीयसे ।

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः * ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३७ ॥

---

* हन्तकारो बलिः ।

चारणः । विहस्य । अवगतदशकन्धरवधैर्विबुधैरिदानीं सत्वरैर्दाशरथौ हर्षपुष्पवर्षमारभ्यते । नेपथ्ये ।

सर्वा गीर्वाणवन्द्यो व्रजत निजगृहान् बन्धुमाधोरण द्राक्
स्वर्गेभस्तम्भशालां नय सुरकरिणं यामिका यान देवाः ।
भूयो दिव्यद्रुमाणां ननु भवतु वने नन्दने संनिवेशो
द्वारि क्षिप्तं यदैन्द्रे दशवदनशिरः किङ्करैरन्तकस्य ॥

चारणः । नाकनरलोकनायकौ दिष्ट्या वर्धेथे पुरंदरप्रतीहारवचनेन अपरिक्षतेन च रामशरीरसौन्दर्येण । तथाहि ।

रणरसिकसुरस्त्रीमुक्तमन्दारदामा
स्वयमयमवतीर्णो लक्ष्मणन्यस्तहस्तः ।
विरचितजयशब्दो बन्दिभिः स्यन्दनाङ्का-
द्दिनकरकुललक्ष्मीवल्लभो रामचन्द्रः ॥

इति निष्क्रान्ताः सर्वे रावणवधो नाम नवमोऽङ्कः ॥

## ॥ अथ दशमोऽङ्कः ॥

अतः परं राघवानन्दो भविता ।

ततः प्रविशति सशोका लङ्का ।

लङ्का । हा दुद्धरतवविसेसपरितोसिदारविन्दासण तिहुअणेक्कमल्ल दसकण्ठ हा हेलाबन्दीकदमहिन्द मेहणाद हा समरसंरम्भसुप्पसण्ण कुम्भकण्ण क्कहिंसि देहि मे पडिवअणम् * ।

---

* हा दुर्द्धरतपोविशेषपरितोषितारविन्दासन त्रिभुवनैकमल्ल दशकण्ठ हा हेलाबन्दीकृतमहेन्द्र मेघनाद हा समरसंरम्भसुप्रसन्न कुम्भकर्ण क्वासि देहि मे प्रतिवचनम् ।

प्रविश्य सत्वरा अलका । पुरोऽवलोक्य कथमियं लङ्काऽ-
स्तमितेऽपि सच्चरितकुण्ठे दशकण्ठे दुःखिता । विमृश्य ।
परिपालना हि भृत्यान् स्वामिनः स्मारयति न गुणग्रामः ।
प्रकाशम् । सखि लङ्के वलीमुखबलबलात्कारमाकर्ण्य निखि-
लनाकतलतिलकायमानयाऽमरावत्या मर्त्यमण्डलशौण्डया
चोज्जयिन्या रसातलभोगभङ्गिभूतया च भोगवत्या तदनुचरेण
च त्रिभुवनवासिनाऽपि पुरीचक्रेण कुशलप्रश्नाय भवतीं प्रति
प्रहिता । अहं च सखीस्नेहादागतास्मि ।

क्विना न दिव्यतरवस्तव काचिदारात्
कच्चिद् भृता न परिखाः कनकाम्बुजिन्यः ।
सृष्टानि कच्चन न रत्नमहागृहाणि
कच्चिच्च काञ्चनमयो दलितश्च सालः ॥ १ ॥

लङ्का । सवाक्स्तम्भम् । सहि केलासुच्चङ्गवासिणि कुबे-
रसच्चरिदे देवणिलये अलए किं णाम न संपण्णं तधा अ
तेण केसरिकलत्तसंभवेण समीरसंभूदेण वाणरेण सुउमारका-
मिनीकरअलकोमलेहिं किसलयेहिं लाडललणाहरोट्ठमञ्जिट्ठे-
कुसुभअकुसुमत्थवएहिं बन्दीकदसुरसुन्दरीचरणप्पहारदोह-
लअसंकन्तालत्तअलंछिदेहिं उक्खअन्धेहिं लीलामन्दिरं मअर-
ध्धअस्स कुलभवणं मलअमग्गपअट्टिणो दक्खिणसमीरणस्स
विस्सामट्ठाणं हिअअस्स पढमणिलओ णिच्चं वसन्तस्स पेर-
न्तनिवेसिदकप्पपाअवप्फुदिपंचविहदेवद्दुमा असोअवणिया
सव्वा संचुण्णिआ पाआलपरिचुंबी परिहापरिक्खेत्तोवि त्थल-
त्थिदिं लंभिदो अविच्छिण्णसंचरणचदुरेणवि मत्तण्डमण्ड-
लेण अलङ्घणिज्जं कणअपाआरचक्कं सुमरणसेसं संपादिदं म-

णिभवणविध्धंसणदंसणे उण णिक्करुणास्स वि जणस्स किं भणि-
अदि असुधाराधोरणी किं उण सिणेहमइं पिअसहिं समास-
दूअ प्पाणपरिच्चअणववसाएहिं विरद्दह्मि * ।

अलका । सखि धर्मजेतरि भीषणविभीषणे विभीषणे वि-
नेतरि तत्रभवती किं सशोकशङ्कुरेव तन्निधिनाथपूर्ववल्लभे
लङ्के विरमन्तु मध्यस्थगितैकावलीकल्पा बाष्पजलकणश्रेणयः ।
विरज्यतु च जरठकाञ्चनारकुड्मलकोटिपाटला दृष्टिः । धौतमा-
ञ्जिष्ठपटच्चरदीनाधरमुद्रा समासादयतु त्वां लक्ष्मीं लघूभव-
न्तु च प्रमाणानुकृतमृणालदण्डाः श्वासदण्डाः ।

लङ्का । जं तिणेत्तमित्तस्स णअरी भणादि † ।

नेपथ्ये ।

रुद्राणि लक्ष्मि वरुणानि सरस्वति द्यौः
सावित्रि धात्रि सकलाः कुलदेवताश्च ।
शुध्यर्थिनी विशति शुष्मणि रामरामा
तत्संनिधत्त सहसा सह लोकपालैः ॥ २ ॥

---

* सखि कैलासोत्सङ्गवासिनि कुबेरसच्चरिते देवनिलयेऽलके किं नाम न संपन्नं तथा च तेन केसरिकलत्रसंभवेन समीरसंभूतेन वानरेण सुकुमारकामिनीकरतलकोमलैः किसलयैर्लाटललनाधरोष्ठमञ्जिष्ठैकसुभगस्तबकैर्बन्दीकृतसुरसुन्दरीचरणप्रहारदोहदकसंक्रान्तालक्तकलाञ्छितैर्वृत्तबन्धैर्लीलामन्दिरं मकरध्वजस्य कुलभवनं मलयमार्गप्रवर्तिनो दक्षिणसमीरणस्य विश्रामस्थानं हृदयस्य प्रथमनिलयो नित्यं वसन्तस्य पर्यन्तनिवेशितकल्पपादपप्रभृतिपञ्चविधदेवद्रुमाऽशोकवनिका सर्वा संचूर्णिता पातालपरिचुम्बी परिखाप्रतिक्षेपोऽपि स्थलस्थितिं लम्भितोऽविच्छिन्नसंचरणचतुरेणापि मार्तण्डमण्डलेनालङ्घनीयं कनकप्राकारचक्रं स्मरणशेषं संपादितं मणिभवनविध्वंसनदर्शने पुनर्निष्करुणस्यापि जनस्य किं भण्यतेऽश्रुधाराधोरणी । किं पुनः स्नेहमयीं प्रियसखीं समासाद्य प्राणपरित्यजनव्यवसायेभ्यो विरतास्मि ।

† यत् त्रिनेत्रमित्रस्य नगरी भणति ।

लङ्का । आकर्णितकेन किं उण विसुद्धिकारणम् * ।

अलका । राक्षसगृहवासः किल । विचिन्त्य । विहस्य च

कालुष्यहेतु वैदेह्या न राक्षसगृहस्थितिः ।
ध्वान्तबन्दीकृताऽपीन्दोर्न कला जातु नीलति ॥ ३ ॥

लङ्का । ता एहि गदुअ पेक्खह्म † ।

अलका । कुबेरप्रसादादिहस्थैव दिव्येन चक्षुषा पश्यामि ।

लङ्का । ता ममावि पिअसही णिवेदु ‡ ।

अलका । इयं रामराणी स्वाहावल्लभे भगवत्यात्मानमाहुतीकुर्वाणा कुररीव करुणक्रेङ्कारकातरया गिरा देवीवाचमभिसंधाय स्तौति विशुद्धिकारणं च ब्रूते ।

लङ्का । किं विअ सुणावेदु § ।

अलका ।

यद्गीर्वाणाः क्रतुबलिलिहो यत्स्मरश्चित्तजन्मा
सीमोन्माथी न च यदुदधिर्जुह्वते यच्च विप्राः ।
यः कृत्स्नस्य प्रलयदिवसो ये च ये च प्रकाशाः
कृत्स्नः सोऽयं जयति महिमा पावकः पावकस्य ॥ ४ ॥

किञ्च ।

मित्रं मन्त्री गुरुः शिष्यः स्वामी भृत्यश्च मे सदा ।
राम एव यथा नान्यस्तथा मां पातु पावकः ॥ ५ ॥

---

* किं पुनर्विशुद्धिकारणम् ।

† तदेहि गत्वा प्रेक्षामहे ।

‡ तन्ममापि प्रियसखी निवेदयतु ।

§ किमिव श्रावयतु ।

लङ्कां प्रति नातः परमवज्रहृदयैः श्रोतुं द्रष्टुं च शक्यते ।

लङ्का । तं भणिअं जणअणन्दिणीए जेण रावणप्पदीणं वि दलिआइं हिअआइं गअणङ्गणादो वि बाहबिन्दुसंदोहा णिवडन्ति । तदोतदो * ।

अलका । ततश्च ।

वन्हिर्ज्वालाः सृजति कियतीर्जानकी किं विधत्ते
कीदृक् छाया रघुपतिमुखे कर्म किं लक्ष्मणस्य ।
इत्थं यावद्विमृशति जनः कौतुकोत्तानितास्य-
स्तावच्छन्नं गगनमखिलं द्योतमानैर्विमानैः ॥ ६ ॥

ततश्च ।

सीतामुदीक्ष्य सुमुखीं शिखिनः प्रवेशे
मुक्तास्तथा सुमनसः सुरसुन्दरीभिः ।
स्रग्विक्रयः सकलखेचरमालिकानां
जातो यथा चिरतरं त्रिदिवे महार्घः ॥ ७ ॥

ततश्च । प्रोद्घुष्टमरुन्धतीप्रभृतिभिरन्तर्हिताभिः पतिव्रताभिः ।

यत्पौलस्त्यगृहोषिता प्रविशति त्वां देव शुद्ध्यर्थिनी
सीतेयं प्रथमा सतीषु कुरु तज्ज्योतिर्जलार्द्राजडम् ।
धर्मम्लानमृणालकाण्डमृदुलान्यङ्गानि दग्धानि चे-
देतस्याः क्व नु शोधकोऽपि भगवन् संशुद्धये यास्यसि ॥ ८ ॥

---

* तद् भणितं जनकनन्दिन्या येन रावणपत्नीनामपि दलितानि हृदयानि । गगनाङ्गणादपि बाष्पबिन्दुसंदोहा निपतन्ति ततस्ततः ।

लङ्का । अहो देवदाणं वि सीदापक्खवादो अथवा सव्वो गुणेसु रज्जदि ण सरीरेसु * ।

अलका । अहो खलु भोः पतिव्रतामयं ज्योतिरनभिभवनीयं ज्योतिरन्तरैः । यतः ।

प्रविशन्त्या चितावह्निं जानक्या परिशुद्धये ।
भेदः कोऽपि न निर्णीतः पयसः पावकस्य वा ॥ ९ ॥

हाहा किमपि निष्करुणचेता हिरण्यरेताः ।

विशुद्धये प्रविष्टाऽसौ वैदेही हव्यवाहनम् ।
अभ्रंलिहानां ज्वालानां चक्रेण च तिरोहिता ॥ १० ॥

लङ्का । कंकेल्लिकेलिकाणणदहणो णिक्करुणाणं पढमोदाहरणं हुदवहो । अलकां प्रति तदोतदो † ।

अलका । सखि लङ्के अतिक्रान्तासु च कतिपयीषु कालकलासु ।

वह्नेः शुद्धिविधायिनो भगवतस्तेजोभिरत्युद्धतै-
रम्लानामनसूयया विरचितां मौलिस्रजं बिभ्रती ।
पादाङ्गुष्ठनखाग्रदत्तनयना नीरन्ध्रविन्यासत-
स्तोकालक्ष्यमुखी चितावलयतो द्राङ् मैथिली निर्गता ॥ ११ ॥

नादौ न मध्ये नान्ते च सीताया हव्यलेहिनि ।
शुद्धस्येव सुवर्णस्य जातो वर्णविपर्ययः ॥ १२ ॥

लङ्का । अणुचिदआरी हुदवहो जं जणअतणआसुद्धिकारणं भोदि ‡ ।

---

* अहो देवतानामपि सीतापक्षपातोऽथवा सर्वो गुणेषु रज्यते न शरीरेषु ।

† कङ्केलिकेलिकाननदहनो निष्करुणानां प्रथमोदाहरणं हुतवहः । ततस्ततः ।

‡ अनुचितकारी हुतवहो यज्जनकतनयाशुद्धिकारणं भवति ।

अलका । सखि सर्वाङ्गहिरण्मयि यथा ।

शुध्धायाः क इवात्र शोधनविधिः स्वःसैन्धवीनामपां
पूतानां परिपूतये किमपरं तत्ते सखी मन्यते ।
लावण्यामृतसारणीसरणिभिर्निर्वाणरोचिर्लतो
निर्दग्धुं कलयाऽपि हन्त न शिखी शक्तोऽभवन्मैथिलीम् ॥१३॥

नेपथ्ये ।

योगीन्द्रश्च नरेन्द्रश्च यस्याः स जनकः पिता ।

लङ्का । ता किं तिस्स * ।

नेपथ्ये ।

सा शुद्धा रामगृहिणी वह्नौ दशरथस्नुषा ॥ १४ ॥

ततश्च ।

बद्धः सेतुर्लवणजलधौ क्रोधवह्निः समित्वं
नीतं रक्षःकुलमधिगताः शुद्धिमन्तश्च दाराः ।
तेनेदानीं विपिनवसतावेष पूर्णप्रतिज्ञो
दिष्ट्याऽयोध्यां व्रजति दयिताप्रीतये पुष्पकेण ॥ १५ ॥

तद्भोः प्लवङ्गयूथपतयः सर्वे गोलाङ्गूलसेनानायका निःशेषाच्छभल्लचमूपालकाश्च महाराजसुग्रीवो वः समाज्ञापयति यदुत सज्जीभवन्तु भवन्तस्त्रिभुवनैकमङ्गलकलशेन रघुवंशमुक्तामणिना क्षात्रधर्मरक्षाविधिसिद्धमन्त्रेण रामदेवेन सममयोध्यां गन्तुम् ।

संप्रेषितश्च हनुमान् भरतस्य पार्श्वे
लङ्काङ्गनाचकितनेत्रनिरीक्षितश्रीः ।

---

* तत् किं तस्याः ।

यात्येष वारिनिधिलङ्घनदृष्टसारो
राज्याभिषेकसमयोचितकार्यसिद्ध्यै ॥ १६ ॥

अलका । तदावामपि रामभद्रदर्शनसुखमनुभवाव इति निष्क्रान्ते । विष्कम्भः ।

ततः प्रविशतो विमानयानेन रामलक्ष्मणौ सीतात्रिजटे सुग्रीवविभीषणौ च ।

रामः । सीतां प्रति ।

यत्सख्युः शशिशेखरस्य धनदाल्लङ्केश्वरेणाहृतं
तन्मन्याच्च विभीषणे परिहृतं दत्तं च तेनाऽपि नः ।
किञ्चिन्न्यञ्चितकन्धरेण शिरसा धृत्वा प्रसन्नां दृशं
तद्भक्त्या ललिताङ्गि पुष्पकमिदं वन्दस्व मोदस्व च॥१७॥

सीता वन्दते ।

रामः । पश्चादवलोक्य ।

यस्यामजर्जरितचन्द्रिकमर्कपादै-
स्त्रासान्निशाचरपतेरुषसि व्यभासि ।
व्यावर्त्य वक्त्रकमलं कमलाक्षि पश्य
लङ्केति तां नवविभीषणराजधानीम् ॥ १८ ॥

सीता । अवलोक्य । एसा सा विणआणन्दणसमाणीद-मेरुमहाजम्बूसाहासमुप्पण्णा सुणीअदि * ।

रामः । आम् । मैथिलि एवं पुराविद आचक्षते । पुरो दर्शयन् ।

अये विलोकय कृशाङ्गि कुतूहलेन
दत्त्वा दृशं तरुणकेतकपत्रदीर्घाम् ।

---

* एषा सा विनतानन्दनसमानीतमेरुमहाजम्बूशाखासमुत्पन्ना श्रूयते ।

नानास्त्रमन्त्रणपरं कपिराक्षसानां
युद्धं कचाकचि तलातलि च प्रवृत्तम् ॥ १९ ॥

अन्यतो दर्शयन् ।

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥ २० ॥

सीता विहस्य अज्जउत्तो जाणादि को उण एसो * ।

रामो लज्जते । सर्वे स्मयन्ते ।

सुग्रीवः ।

लङ्केन्द्रानुज एष मैथिलि महान् योऽयं कबन्धः पुरो
वारां भर्त्तरि शैलसेतुरपरः प्रीतो यथा राजते ।
निद्रालोरतितुन्दिलस्य खलतेः क्षीबस्य घोणास्रजा-
मोघेनास्य भयस्पृशोऽपि निभृतं स्वर्वासिनो हासिताः ॥ २१ ॥

सीता । अज्जउत्तेण देवा वि पहसणणट्टं पेक्खाविदा † ।

रामः । किञ्चित्स्मित्वा पुष्पकं प्रति हंहो विमानराज विमुच्य वसुधासविधवर्तिनीं गतिं किञ्चिदुच्चैर्भव कुतूहलिनी जानकी दिव्यदर्शनव्यतिकरस्य ।

ऊर्ध्वंगतिनाटितकेन ।

रामः ।

---

* आर्यपुत्रो जानाति कः पुनरेषः ।

† आर्यपुत्रेण देवा अपि प्रहसननृत्यं प्रेक्षायिताः ।

यथायथा रोहति बद्धवेगं
व्योम्नः शिखां पुष्पकमानताङ्गि ।
महाम्बुधीनां वलयैर्विशालै-
स्तथातथा संकुचतीव पृथ्वी ॥ २२ ॥

सीतां प्रति सुरचारणकिन्नरविद्याधरसंकुलं गगनमार्गमीक्षतां मैथिली ।

प्रविश्य विद्याधरः । रामभद्र महेन्द्रादेशादेष रत्नशेखरो विद्याधरकुमारस्ते दिव्यचरितं व्यनक्ति ।

रामभद्रः । अहो महान् प्रसादोऽस्मासु देवराजस्य ।

रत्नशेखरः । सीतां प्रति ।

बन्धे वारिनिधेः कृतेऽपि गिरिभिः सोढः शिरोमण्डल-
च्छेदो राक्षसपुङ्गवेन समरे यस्याः किमन्यत्कृते ।
कीदृक् सा जनकात्मजेति रभसाद्विद्याधरैर्दुन्दुशः
पाणिच्छत्रनिवारितार्ककिरणैस्त्वं कौतुकाद् दृश्यसे ॥ २३ ॥

सीता । अपवार्य ।

विद्याधराः सहचरीचतुरोक्तिमार्गे
रागस्पृशो गगनगर्भयथेष्टचेष्टाः ।
निस्तन्पमल्पसमयं निबिडाभ्रखण्ड-
कुञ्जान्तरेष्विह रताद्भुतमाद्रियन्ते ॥ २४ ॥

रामः । प्रिये पृथ्वीपुत्रि नीरन्ध्रबन्धमपि वारिवाहव्यूहं द्विधा विधाय पुष्पकं प्रवर्तते विलोक्य विहस्य ।

क्षिप्तं त्वया काञ्चनकान्तिदाम
यन्मत्तवारणमुपेत्य कुतूहलिन्या ।

तेनामुना जलधरोऽयमरालकेशि
सद्यस्तडिद्वलयवानिव पश्य जातः ॥ २५ ॥

अपि च ।

हस्ते त्वया हारिणि हारयष्टिभि-
र्विमानवातायनतः कुतूहलात् ।
कृते विदध्यात्सदृशीं प्रतिक्रिया-
मितीव धाराम्बु घनो निरस्यति ॥ २६ ॥

सीता । अज्जउत्त किं उण एदं करिदन्तच्छेदपण्डुरं पुव्वपच्छिमसिन्धुबन्धोभअपेरन्तं तदुत्तरदिसाकुहरपूरणधुरन्धरं दीसदि * ।

रत्नशेखरः । जनकनन्दिनि किमत्र रावणारिणा रत्नशेखरं पृच्छ हिमालयः खल्वयम् ।

सीता । किं जो सो विन्दारअविन्दवन्दिदरुद्दचरणपडिबिम्बचुंबिदसिलुच्छङ्गो गङ्गासोत्तसीमन्तिदणिअंबो हेरम्बदन्तमुसलुल्लिहिदमेहलाबन्धो णिवडिदहरवुसहवरखुरखण्डिदधरणिवट्टो चित्तसिहण्डिमण्डलावचिदमन्दारकुसुमप्पसरो गोरीगुरुत्ति णिव्विग्घमहग्घिदो सुणीअदि † ।

रत्नशेखरः । स एवायम् ।

---

* आर्यपुत्र किं पुनरिदं करिदन्तच्छेदपाण्डुरं पूर्वपश्चिमसिन्धुबन्धोभयपर्यन्तं तदुत्तरदिशाकुहरपूरणधुरन्धरं दृश्यते ।

† किं य एष वृन्दारकवृन्दवन्दितरुद्रचरणप्रतिबिम्बचुम्बितशिलोत्सङ्गो गङ्गास्रोतःसीमन्तितनितम्बो हेरम्बदन्तमुसलोल्लिखितमेखलाबन्धो निपतितहरवृषभवरखुरखण्डितधरणिपृष्ठश्चित्रशिखण्डिमण्डलावचितमन्दारकुसुमप्रसरो गौरीगुरुरिति निर्विघ्नमहार्घितः श्रूयते ।

श्रीकण्ठश्वशुरः स एष भगवान् मेनापतिः पर्वतः
पुत्रीवानुमया पुरः किमपरं हेरम्बमातामहः ।
यस्यायं महिमा यदत्र शमिनः श्यामाकमुष्टिंपचाः
स्वास्वेवाश्रमभूषु दिव्यवपुषः क्रीडन्ति कामाज्ञया ॥२७॥

अपिच ।

स्त्रीणां जन्ममहातरोः किमपरं सौभाग्यलाभोत्सव-
स्तत्प्राप्तेरधिदैवतं गिरिसुता साप्यस्य कुञ्जान्तरे ।
एकाङ्गुष्ठनिपीडितक्षिति तपस्तप्त्वा सहस्रं समा-
श्चन्द्रापीडशरीरसंविभजनप्रेमाणमापद्यत ॥ २८ ॥

सीता । अज्जउत्त इधज्जेव अध्धनारीसरो हरो संवुत्तो * ।

रत्नशेखरः । आं वासुन्धरेयि ।

अत्रोढायां गिरिदुहितरि प्रीतिमानिन्दुमौलिः
प्रेमावेशाज्झटिति भगवानर्धनारीश्वरः सन् ।
मन्दं देवैः प्रणतचरणः प्रत्यभिज्ञानलेशा-
द्वामे पाणौ तदितरकरं ताडयित्वा जहास ॥ २९ ॥

रामः । किमुच्यते सर्वाश्चर्यनिधानं हि नीहारमहागिरिः ।

रत्नशेखरः । यथाज्ञातं विराधविध्वंसनेन ।

अस्मिन्नूढा मृडानी द्युसरिदिह धृता दन्तिदैत्योऽत्र भिन्न-
श्छिन्नं ब्राह्मं शिरोऽस्मिन्निह गुरुनिधने निर्मिता मातरश्च ।
दृक्श्रोत्रप्रीतिपेयं दलितसुरपुरीदुर्गमद्वारमुद्रं
सिद्धानां पूर्वसिद्धैरिति हरचरितं वर्ण्यते चित्रमत्र ॥ ३० ॥

---

* आर्यपुत्र । इहैवार्धनारीश्वरो हरः संवृत्तः ।

सीता । इह हिमवन्तमहीहरे चन्दसेहराहिं मअरध्धअ-णिद्दहणं रहुउलमहत्तरीआओ पसंसंतीओ आसि ता कहिं उण तम् * ।

रत्नशेखरः । यदिदं निर्मितमिव मरकतमणिमरीचिवीचि-भिराच्छादितमिव वंशकरीरनीलकान्तिभिः परिकल्पितमिवा-नूरुसारथिरथतुरङ्गमरोमराजिभिरुत्पादितमिव शितिकण्ठक-ण्ठमण्डलीमेचकरुचिसंचयैस्तरुभिराश्रमपदं भगवतो वृषभध्व-जस्य ।

एतत्सुन्दरि देवदारुविपिनं शैलस्य गौरीगुरो-
रस्मिन् वासवशासनेन रहयन् सद्यः समाधिक्रियाम् ।
प्रत्यहं गिरिजन्मनः सुरजने स्तोत्राय सज्जाञ्जलौ
रुद्रस्याम्बकपावकेन मदनो वेगादनङ्गीकृतः ॥ ३१ ॥

सीता । परमेसरसरीरपरिक्खिदतिक्खविसिहस्स मअरध्ध-अस्स कदमो उण णिवेसो † ।

रत्नशेखरः ।

एतन्मैथिलि मन्मथाश्रमपदं रत्या स्वयं वर्धितै-
र्लीलाशाखिभिरञ्चितान्तिकमितः केलीशकुन्ताश्रयैः ।
शृङ्गारश्च रसो मधुश्च समयो देवश्च ताराधिपो
रागः पञ्चमसंज्ञकश्च ललितैस्ते यत्र सिद्धा व्रतैः ॥३२॥

सीता । सकौतुकम् । पुञ्जीकदअज्जउत्तकित्तिसंताणाणु-आरी रासीभूदहरट्टहाससरिसनिवेसो पलआणलपिण्डीकद-

* इह हिमवन्महीधरे चन्द्रशेखरान्मकरध्वजनिर्दहनं रघुकुलमहत्तरि-काः प्रशंसन्त्य आसन् तत् क्व पुनस्तत् ।

† परमेश्वरशरीरपरीक्षिततीक्ष्णविशिखस्य मकरध्वजस्य कतमः पुन-र्निवेशः ।

क्खीरसमुद्ददुद्धुक्करपडिरूवो कदरो उण एस महिहरो * ।

रामः । रुद्रावासः कैलास इति मे तर्कः ।

रत्नशेखरः । यथावगतं ताडकाताडनेन ।

कैलासः स्फटिकाद्रिरेष भगवानेनं भवानीसखः
सख्यादैलबिलस्य भक्तिजनिताच्चित्यं शिवः सेवते ।
किन्त्वास्मिन्ननुमेखलं नखमुखच्छेदैः समावेद्यते
हेलोत्पाटनपूर्वकालनिहितैर्लङ्कापतेर्विक्रमः ॥ ३३ ॥

अत्र च ।

कैलासाचलकर्णिकेयमलका नेत्रैकपेया पुरी
देवस्य द्रविणप्रभोः किमपरं शृङ्गारसारस्य भूः ।
यस्यामस्तमितेऽद्य राक्षसपतौ यक्षाङ्गनानाममी
वर्तन्ते प्रतिचत्वरं प्रतिगृहं प्रत्यापणं चोत्सवाः ॥ ३४ ॥

रामः । पुरोऽवलोक्य कः पुनरस्तमिताखिलककुद्बन्धः सलिलस्कन्धः ।

रत्नशेखरः । उप्रत्तिसदनं कलहंसवयसामाकरः कनकारविन्दानां विलासदीर्घिका देवदेवस्य समवगाढतटान्तरसमदमहोष्मणा हेरम्बेण रभसाचान्तवीतवीचिभङ्गं गगनाङ्गणपरिभ्रामिणा चन्द्रहरिणेन लीलालीढसीकरकणं कूलकुलायकारिणा कुमारमयूरेण प्रसारितकराकृष्यमाणार्णस्कं करिमकरत्रासादैरावतेभसेवितशाद्वलोपकण्ठं नीलकण्ठवृषेण समध्यासितपरिसरं संतानकारण्ये नारायणवराहेण वर्णितवैभवं वैकुण्ठकम-

* पुञ्जीकृतार्यपुत्रकीर्तिसन्तानानुकारी राशीभूतहराट्टहाससदृशनिवेशः प्रलयानलपिण्डीभूतक्षीरसमुद्रदुग्धोत्करप्रतिरूपः कतरः पुनरेष महीधरः ।

टेनाभिलषितगर्भं पद्मनाभमहामत्स्येन नीतनीरं त्रिसन्ध्यमरु
न्धतीकराकम्पितकमलिनीपत्रपात्रैरानन्दितपुरन्दरमानसं मा-
नसं नाम दिव्यं सरः । सीतां प्रति ।

एतन्मानिनि मानसं सुरसरो निर्लूनहेमाम्बुजं
पार्वत्या प्रियपूजनार्थममुतो गङ्गा सरिन्निर्गता ।
अस्माच्चित्रशिखण्डिभिश्च परमे पर्वण्युपादीयते
स्नानोत्तीर्णवृषाङ्कभस्मरजसां सङ्गात्पवित्रं पयः ॥ ३५ ॥

सीता । को उण एसो णिच्चतरुणतरुमण्डलीचुम्बिदमहा-
णिअम्बनिवेसो मत्तण्डचण्डेक्करहचक्कचुम्बणमसिणसुवण्ण-
सिहरो महीहरो दीसदि * ।

रत्नशेखरः ।

नेत्रं वासुकिरत्र केशवभुजैः संदानितोऽयं पुरा
चक्रुर्बल्लवतां परिभ्रमविधावेतस्य देवासुराः ।
मन्थाः सोऽयमभूत्समुद्रकलशे तन्नीयतां कौतुका
देव श्रोत्रपरम्परापरिचितो दृग्गोचरं मन्दरः ॥ ३६ ॥

रामं प्रति इतो विषनिष्यन्दिनीं विद्विषिषु प्रसादामृतवी-
चिमालिनीं सुहृत्सु निवेशय दृशम् ।

क्षीराम्भः परितोऽयमर्णवपतिर्जातं मृगाङ्कादिकं
पीयूषावधि रत्नजातममुतः किं चास्य तीरान्तरे ।
मुक्त्वा कल्पभृतः स्वयंवरसुरान् सौभाग्यदानायणी-
लक्ष्म्याऽस्मिन् कुसुमावली वरयितुं वैकुण्ठकण्ठेऽर्पिता ॥ ३७ ॥

* कः पुनरेष नित्यतरुणतरुमण्डलीपरिचुम्बितमहानितम्बसंनिवेशो मार्तण्डचण्डैकरथचक्रचुम्बनमसृणसुवर्णशिखरो महीधरो दृश्यते ।

रामचन्द्र इतइतोपि दृश्यतां द्रष्टव्यम् ।

यं नित्यं भगवान् प्रदक्षिणयति भ्राम्यत्प्रभाप्रसर-
ध्वान्तश्रेणिविभक्तवासरनिशाविन्यासरेखं रविः ।
धत्ते कां च न काञ्चनश्रियमसौ मेरुर्गिरीणां गुरु-
र्देवैः सार्द्धमधित्यकामधिवसत्यस्यामरग्रामणीः ॥ ३८ ॥

सीतां प्रति ।

एतां यस्य पुरः सुमेरुशिखरे दम्भोलिपाणेः पुरीं
त्वत्कालोकनकौतुकोत्तरलितैर्व्यग्रां पुरन्ध्रीजनैः ।
यस्यास्तोरणगोपुरप्रणयिभिर्नामाङ्कितैर्मार्गणैः
पौलस्त्यस्य विनापि वर्णरचनां न्यस्ता प्रशस्तिः स्थिरा ॥ ३९ ॥

रामः । हंहो पुष्पक इतोऽपि किञ्चिदुच्चैर्भव न तृप्यति चेतो दिव्यदर्शनकुतूहलस्य सर्वं विमानोर्ध्वगतिं नाटयन्ति ।

सीता । केअईकेसरपराअपडिरूवो पिक्कघणसारपंसुपसरसरिच्छछवी मुत्ताहलविसदसोहासण्णिवेसो णिवेसिदाणंदकंदो हिअअस्स कुदो उण एतावंतो जोण्हावित्थरो * ।

रामः । मन्ये चन्द्रलोकसमीपे वर्तामहे ।

रत्नशेखरः । यथाह मारीचहरिणारिः ।

सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्
पश्यैरावतकान्तदन्तमुशलच्छेदोपमेयाकृतिः ।
उन्मीलत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करैः
कान्तानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ ४० ॥

---

* केतकीकेसरपरागप्रतिरूपः पक्वघनसारपांसुप्रसरसदृशच्छविर्मुक्ताफलविशदशोभासंनिवेशो निवेशितानन्दकन्दो हृदयस्य कुतः पुनरेतावान् ज्योत्स्नाप्रसरः ।

सीतां प्रति ।

गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः
सद्यो मार्जितदाक्षिणात्यतरुणीदन्तावदातद्युतिः ।
चन्द्रः सुन्दरि दृश्यतामयमसौ चण्डीशचूडामणिः
संबन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरुः ॥ ४१ ॥

अतः परमगम्या अस्मादृशां भुवः स च ब्रह्मलोक इति श्रूयते तत्र च किल ब्रह्मर्षिपरिषत्परिवादी परमेष्ठी गरिष्ठं तपस्तप्यते ।

रामः ।

लक्ष्मीं वक्षसि कौस्तुभस्तबकिनि प्रेम्णा करोत्यच्युतो
देहार्धे वहति त्रिविष्टपगुरुर्गौरीं स्वयं शङ्करः ।
शङ्के पङ्कजसंभवस्तु भगवानद्यापि बाल्यावधेः
सर्वाङ्गप्रणयां प्रियां कलयितुं दीर्घं तपस्तप्यते ॥ ४२ ॥

सर्वे स्मयन्ते ।

सीता । भअवं गअणपुप्फ पुप्फअ संपदं परिणामिअ अंबुरासिलंबी भव जेण त्थिरं जलणिहिजाणपत्तं सीमंतरेहं वारुणीतरुणीए अज्जउत्तप्पआवप्पसरपढममग्गं महासेउबंधं पेक्खह्म *। विमानावतरणनाटितकेन ।

रत्नशेखरः । स्वस्ति रामभद्राय साधयामि सम्प्रति इति निष्क्रान्तः ।

त्रिजटा । सीतां प्रति । णीलमणिकुट्टिमं विअ वरुणभवणंगणस्स णिग्गममग्गं विअ पाआलतलतिमिरचक्कवालस्स आल-

* भगवन् गगनाङ्गणपुष्प पुष्पक साम्प्रतं परिणम्याम्बुराशिलम्बी भव येन स्थिरं जलनिधियानपत्रं सीमन्तरेखां वारुणीतरुण्या आर्यपुत्रप्रतापप्रसरप्रथममार्गं महासेतुबन्धं पश्यामः ।

वालं विश्र भुश्रणमहामहीरुहस्स गोट्ठिट्ठाणं विश्र दिसाविलासिणीणं दप्पणं विश्र गश्रणाभोश्रस्स महोश्रहिं पिश्रसहि पसद्द्यमाणयसारिश्रच्छी देक्ख * ।

लक्ष्मणः ।

यत्खातः सगरेण मर्त्यसरितं मन्दाकिनीं कुर्वता
पूर्णो यच्च भगीरथेन गिरिभिर्बद्धो यदार्येण च ।
तत्ते चित्रविचेष्टितं श्वशुरयोर्भर्तुश्च वारां निधिं
वीक्षस्वैनमधो निधाय नलिनच्छायामुषी चक्षुषी ॥ ४३ ॥

सीता । आदिकंदं लच्छीलदाकंदलीए उदयद्दिं हरचूडाचंदस्स वारीबंधमैरावणस्स महाकलसं पेऊसस्स पणमामि भश्रवंतमुद्दन्तम् † ।

रामः ।

धत्ते यत्किलकिञ्चितैकगुरुतामेणीदृशां वारुणी
वैधुर्यं विदधाति दम्पतिरुषां यच्चन्द्रिकार्द्रं नभः ।
यत्पीयूषभुजां च मन्मथसुहृन्नित्यं वयः संपदां
यल्लक्ष्मीरधिदैवतं जलनिधेस्तच्चित्रमाचेष्टितम् ॥ ४४ ॥

लक्ष्मणः ।

वह्निं योऽम्भःसमिद्भिर्ज्वलयति जगतीद्वीपखण्डानि यस्य
स्वादिष्ठा यत्प्रसूतिस्त्रिदशयुवतयः श्रीः सुधा वारुणी च ।

---

* नीलमणिकुट्टिममिव वरुणभवनाङ्गणस्य निर्गममार्गमिव पातालतिमिरचक्रवालस्यालवालमिव भुवनमहामहीरुहस्य गोष्ठीस्थानमिव दिशाविलासिनीनां दर्पणमिव गगनाभोगस्य महोदधिं प्रियसखि प्रसृतीयमानप्रसारिताक्षी पश्य ।

† आदिकन्दं लक्ष्मीलताकन्दल्या उदयाद्रिं हरचूडाचन्द्रस्य वारीबन्धमैरावणस्य महाकलशं पीयूषस्य प्रणमामि भगवन्तमुदन्वन्तम् ।

सोऽपि ह्युड्डीनलीनैः शरपतनभयाद्द्विभिः क्षुण्णपादै-
र्देवि त्वद्भर्तुराज्ञामिव वहति महाशैलसेतुच्छलेन ॥ ४५ ॥

सुग्रीवः । देवि मैथिलि किमपि महिमातिरेकस्त्रिभुवनजयपताकायते भगवतो भागीरथीवल्लभस्य ।

या स्त्रीणामधिदैवतं गिरिसुता तत्सोदरः सानुमान्
मैनाको रजताकरः सुतनयः शैलेश्वरो येन सः ।
पक्षच्छेदसमुद्यतेन्द्रकुलिशत्रासान्निलीय स्थितः
सोऽप्येतस्य करालकुक्षिकुहरे पातालजम्बालिनि ॥ ४६ ॥

विभीषणः ।

हेरम्बमज्जनविधाविह दानगन्धा-
द्वार्दन्तिनो धुतकरालकरं पतन्तः ।
पश्चादुपेत्य सपदि प्रमथैर्ध्रियन्ते
रुद्राङ्कुशैर्विरचिताङ्कुशकेलयोऽमी ॥ ४७ ॥

तिर्यग्विमानगतिनाटितकेन ।

सीता । अखण्डिताखण्डलकोअंडमंडलपडिरूवो कदरो उण एसुद्देसो * ।

विभीषणः ।

पश्यस्यये जलधिपरिखं मण्डलं सिंहलानां
चित्रोत्तंसं मणिमयभुवा रोहणेनाचलेन ।
दूर्वाकाण्डच्छविषु चतुरं मण्डनं यद्वधूनां
गात्रेष्वम्भो भवति गमितं रत्नतां शुक्तिगर्भैः ॥ ४८ ॥

किञ्च ।

---

* अखण्डिताखण्डलकोदण्डमण्डलप्रतिरूपः कतरः पुनरेष उद्देशः ।

जनश्च वाक्सुधासूतिर्मणिसूतिश्च रोहणः ।
नान्यत्र सिंहलद्वीपान्मुक्तासूतिश्च सागरः ॥ ४९ ॥

सीता । इह किल भअवं अगत्थिमहेसी णिवसदि * ।

रामः । इदं हि भगवतो रत्नाधिपतेरधित्यकायामाश्रमपदं धर्माश्रमपदं पुनरग्रे ।

सुग्रीवः ।

क्रान्त्वा स्फुटस्फुटितशुक्तिविमुक्तमुक्त-
मम्भोनिधिं विधुतदिक्प्रविभागमेतत् ।
प्राप्ता वयं नवरसाञ्जनपुञ्जनीलं
कूलं कुलायगशकुन्ततमालमालि ॥ ५० ॥

सीतां प्रति ।

चटुचटुलनिमीलस्पर्शलीलातिमील-
नयनयुगमतङ्गारब्धनिद्राविनोदम् ।
शुकहरितनितम्बं पश्य वंशीवनान्ते-
रचलमखिलपृथ्वीमाल्यवन्माल्यवन्तम् ॥ ५१ ॥

सीता । जहिं किल तुम्हाणं वासारत्तो अदिक्कंतो † ।

रामः ।

आं वैदेहि ।

द्युतिजितकरवालः सूतवंशीप्रवालः
स्फुटितकुटजमालः स्पष्टनीलत्तमालः ।

---

* इह किल भगवानगस्त्यमहर्षिर्निवसति ।

† यत्र किल युष्माकं वर्षर्तुरतिक्रान्तः ।

इह हि गतमरालः केतकालीकराल
शिखरिणि मम कालः सोऽभवन्मेघकालः ॥ ५२ ॥

पुरो दर्शयन् ।

अयं स ते चण्डि शिखण्डिपुत्रको
गिरेस्तटात्तत्क्षणमूर्द्धकन्धरः ।
निरीक्ष्य नौ स्नेहरसार्द्रया दृशा
प्रियां पुरस्कृत्य करोति ताण्डवम् ॥ ५३ ॥

सीता । पुत्त एहि उड्डिऊण विमानसिहरं समारुह * ।

रामः । अतिसुमुखा जानकी ।

सुग्रीवः । सीतां प्रति ।

गुणवति फणिवीरुद्बद्धपूगप्रकाण्डः
प्रचुरमरिचवल्लीवल्लरीकः पुरस्तात् ।
मलय इह महाद्रिर्नन्दनश्चन्दनाना-
मयमधिलुठदेलाश्लिष्टकक्कोलयष्टिः ॥ ५४ ॥

सीता । रणरणअकारणं कामिमिहुणाणं माणिणीमाण-
गण्ठिणिट्ठवणो जत्तो किल समीरणो पअट्टदि † ।

रामः । देवि यथा श्रुतवत्यसि ।

ये दोलाकेलिदानव्यतिकरगुरवो ये लतागर्भकाराः
कोदण्डाभ्यासविद्याविधिषु विजयिनो ये स्मरस्वेदवाराम् ।
तन्वन्तश्चैत्रमैत्रं मलयशिखरिणस्ते विनिर्यान्त्यमुष्मादा-
कैलासं समीराः सुरतमहमहासाक्षिणो दाक्षिणात्याः ॥ ५५ ॥

---

* पुत्र एहि उड्डीय विमानशिखरं समारोह ।

† रणरणककारणं कामिमिथुनानां कामिनीमानग्रन्थिनिष्ठपनो
किल समीरणः प्रवर्तते ।

अपि च पुनः पश्य ।

रत्नप्रसूरिति समस्ततरङ्गिणीषु
वारां निधेर्भगवतः सुभगं कलत्रम् ।
अस्मिन्निरन्तरनितम्बिनि ताम्रपर्णी
चक्षुःपथं व्रजतु मौक्तिककामधेनुः ॥ ५६ ॥

अस्यां पुनरिदं सौभाग्यकारणम् ।

रोधेरेखे चन्द्रनारायरूपे
वारि स्वाद्यं नारिकेलाम्भसोऽपि ।
यच्चैवान्यः संभवो मौक्तिकानां
तेनाम्भोधेर्वल्लभा ताम्रपर्णी ॥ ५७ ॥

विमानवेगनाटितकेन रामः । पुरोऽवलोक्य ।

दन्तोलूखलिभिः शिलोञ्छिभिरियं कन्दाशनैः फेनपैः
पर्णप्राशनिभिः कुटीचरकुलैः काले च पक्वाशिभिः ।
नीवारप्रसृतिंपचैश्च परितः पूतं मुनेराश्रमं
पश्यन्ती भव पावना भगवतः पातुर्निधेरम्भसाम् ॥ ५८ ॥

हस्तमुन्नम्य ।

हंहो पुष्पक वायुवेग मुनिना धूमः पुरः पीयते
छायां मा कुरु कोऽप्ययं दिनमणावेकाग्रदृष्टिः स्थितः ।
दूरादत्र भव प्रदक्षिणगतिः स्थाणोरिदं मन्दिरं
किञ्चित्तिष्ठ तपस्विनस्तव पुरो यावत्प्रयान्त्यन्यतः ॥ ५९ ॥

सीता । अज्जउत्त होमोहिज्जंतहुदवहा विवरिज्जंतकथमुत्ता पठिज्जन्तबटुचरणा वरिणज्जन्तधम्मसात्था उअदिसिज्जंतसमाधिमग्गा वरिवसिज्जंतअदिहिवग्गा पण्णसालास-

णिवेसं अम्हारीसाणां संसारगंण्ठिणिठ्ठवणा * ।

रामः । प्रकृष्टं हि तपः किमपि कामदुघम् । अग्रतो दर्शयन् ।

एते व्योमनि शोषयन्ति हरिणत्रासाच्चिरं चीवरे
संध्याचामविधौ कमण्डलुमिमं पश्यन्ति रिक्तं कृतम् ।
भिक्षन्ते च फलान्यमी करपुटीपात्रे वनानोकहा-
नेषामर्घविधौ च सन्निधिगताः पुष्यन्त्यकाण्डे लताः ॥ ६० ॥

समंतादवलोक्य कारय चक्षुषी पारणामवलोकय कुम्भसंभवमुनेराश्रमतरून् ।

स्वाध्यायान्ते बटुपरिषदां येषु विश्रान्तिसौख्यं
लोपामुद्राकरपुटजलैः प्रत्यहं येऽवसिक्ताः ।
आगस्त्येऽस्मिन् विधुतरजसामाश्रमे पादपानां
केऽप्युत्कर्षा यदतिथिकृते सर्वकालं फलन्ति ॥ ६१ ॥

लक्ष्मणः । अति हि तपस्विसंकट भुवः ।

रामः । हंहो विमानराज कञ्चिदेकदेशमलङ्कुरु यावदहमग्निमारुतसंभवं मुनिमनुवर्ते । सर्वे विमानावरोहणं नाटयन्ति ।

सुग्रीवबिभीषणौ । देव त्वर्य्यतामेष मैत्रावरुणो विकङ्कुततरुतले भगवत्या लोपामुद्रया सममस्मान् वीक्षमाणस्तिष्ठति ।

ततः प्रविशत्यगस्त्यो लोपामुद्रा च ।

अगस्त्यः । भवति धर्मसुते लोपामुद्रे ।

प्रीतिस्निग्धैः खेचरैरर्च्यमानो
बिभ्रद्व्योम्नः सीम्नि वैमानिकत्वम् ।

---

* होमोह्यमानहुतवहा विवियमाणकथामुक्ताः पठ्यमानबटुचरणा वर्ण्यमानधर्मशास्त्रा उपदिश्यमानसमाधिमार्गा वरिवस्यमानातिथिवर्गाः पर्णशालासंनिवेशमस्मादृशानामपि संसारग्रन्थिनिष्ठपनाः ।

सेतोर्बन्धाद्राक्षसानां निरोधा-
द्दिष्ट्या रामो दृश्यते पूर्णकामः ॥ ६२ ॥

रामः । उपसृत्य सपादोपग्रहम् ।

काशपुष्पप्रतीकाश वन्हिमारुतसंभव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥ ६३ ॥

सर्वे प्रणमन्ति ।

अगस्त्यः ।

का दीयतां तव रघूद्वह सम्यगाशी-
र्निष्कण्टकानि विहितानि जगन्ति येन ।
आशास्महे ननु तथापि सह स्वविरै-
र्भूकाश्यपोपमसुतद्वितया वधूः स्यात् ॥ ६४ ॥

रामः । परमनुगृहीतं रघुकुलम् ।

लोपामुद्रा ।

एह्येहि वत्स रघुनन्दन रामचन्द्र
चुम्बामि तेऽद्य वदनं करचूचुकेन ।
सोढाः कथं कथय ते दशकण्ठबाणा-
श्छिन्नानि रावणशिरांसि कथं च तानि ॥ ६५ ॥

रामो लज्जते । अहो महानुभावापि लोपामुद्रा स्त्रीस्वभा-
वसुलभं ब्रूते ।

लोपामुद्रा । रामं शिरसि स्पृष्ट्वा ।

अभ्युद्धृतैर्गिरिभिरम्बुधिसेतुहेतोः
श्वश्रूरियं भगवती कुपिता किमुर्वी ।

कुम्भोद्भवस्य कथितं न पुनः किमस्य
जाता यदेकचुलुके न चतुःसमुद्री ॥ ६६ ॥

अगस्त्यः । सुतपस्विनि लोपामुद्रे वसिष्ठप्रतिष्ठितो राज्याभिषेकसमयो नातिदूरवर्ती तद्विसर्ज्जय रामभद्रम् ।

लोपामुद्रा । गच्छ रामचन्द्र गच्छ सगरभगीरथसदृशो भव ।

सर्वे समुत्थाय विमानावरोहं नाटयन्ति ।

सीता । दिठ्ठिआ संपदं वसुमदी दीसदि * ।

रामः । तत्रापि द्रविडाः ।

पर्णं नागरखण्डमार्द्रसुभगं पूगीफलैलास्तथा
कर्पूरस्य च यत्र कोऽपि चतुरस्ताम्बूलयोगक्रमः ।
देशः केरल एष केलिसदनं देवस्य शृङ्गारिण-
स्तद्दृष्ट्वा कुरु कोमलाङ्गि सफले द्राघीयसी लोचने॥६७॥

किञ्च ।

नेत्रयात्राशरत्नैस्त्र्यम्बकस्यापि ताडनी ।
भ्रूलता द्राविडस्त्रीणां द्वितीयं कामकार्मुकम् ॥ ६८ ॥

सुग्रीवः । दक्षिणतो दर्शयन् देव सप्तगोदावरीतिरे भीमो भगवान् भर्गः । प्रणम्यतामयम् ।

रामः ।

नमो नागावलीबद्धमहाधवलमूर्तये ।
जटापल्लवकम्राय हरचन्दनशाखिने ॥ ६९ ॥

सर्वे प्रणमन्ति ।

रामः ।

---

* दिष्ट्या साम्प्रतं वसुमती दृश्यते ।

वाक्सत्वाङ्गसमुद्भवैरभिनयैर्नित्यं रसोल्लासतो
वामाङ्ग्यः प्रणयन्ति यत्र मदनक्रीडामहानाटकम् ।
अत्रान्ध्रास्तव दक्षिणेन त इमे गोदावरीस्रोतसां
सप्तानामपि वार्निधिप्रणयिनां द्वीपान्तराणि श्रिताः ॥७०॥

किं वा ।

हरनेत्राग्निदग्धस्य केतौ मकरलक्ष्मणः ।
दृष्टिरन्ध्रपुरन्ध्रीणां सञ्जा संजीवनौषधिः ॥ ७१ ॥

विभीषणः । उभयकूलप्ररूढनारिकेलनिकरक्रमुककुलपाली-क्षिप्ता कावेरी सरिदियम् ।

रामः ।

कावेरी कबरीव भामिनि भुवो देव्याः पुरो दृश्यतां
पूगैर्नागलताश्रितैरुपदिशत्याश्लेषविद्यामिव ।
कर्णाटीजनमज्जनेषु जघनैर्यस्याः पयः प्लावितं
पीत्वा नाभिगुहाभिरात्तरुचिभिः प्राचीं दिशं नीयते ॥७२॥

किञ्च ।

कर्णाट्यो यत्रयत्रैव विक्षिपन्ति दृशौ दिशि ।
विक्षेपाग्रेसरः कामस्तत्रतत्रैव धावति ॥ ७३ ॥

सुग्रीवः । भरताग्रजाग्रमग्रे महाराष्ट्रविषयः ।

रामः ।

यत् क्षेमं त्रिदिवाय वर्त्म निगमस्याङ्गं च यत्सप्तमं
स्वादिष्ठं च यदैक्षवादपि रसाच्चक्षुश्च यद्वाङ्मयम् ।
तद्यास्मिन् मधुरं प्रसादि रसवत् कान्तं च काव्यामृतं
सोऽयं सुभ्रु पुरो विदर्भविषयः सारस्वतीजन्मभूः ॥ ७४ ॥

किञ्च ।

रतविद्याविदग्धानां विभ्रमोल्लेखलम्पटः ।
नित्यं कुन्तलकान्तानां किङ्करो मकरध्वजः ॥ ७५ ॥

सीता । जहिं उप्पणा मे पिदामहससुरस्स घरिणी इंदुमदी * ।

त्रिजटा । संस्कृतमाश्रित्य ।

कीदृक्केलिकलस्य किल भवति सखी सुखधाम ।
का च सुता शशितिलकस्य विन्ध्यमहीधरधाम ॥

सीता । संस्कृतमाश्रित्य । नर्मदा ।

त्रिजटा । इयं णम्मदा दीसदि † ।

सीता । इदो अम्हाणं अज्जसुमंतो णिवुत्तो ‡ ।

रामः । अपवार्य ।

अप्यस्मदग्रकरयन्त्रनिपीडितानां
धाराम्भसां स्मरसि मज्जनकेलिकाले ।
सुभ्रु त्वया निजकुचावरणैकयोग्य-
मब्जाब्जवल्लिदलमावरणाय दत्तम् ॥ ७६ ॥

किञ्च ।

तदिह कलहकेलौ सैकते नर्मदायाः
स्मरसि सुतनु कच्चिन्नौ पराधीनसुप्तम् ।
उपसजलसमीरप्रेङ्खणाचार्यकार्यं
तदनु मदनमुद्रां तच्च गाढोपगूढम् ॥ ७७ ॥

---

* यत्रोत्पन्ना मे पितामहश्वशुरस्य गृहिणीन्दुमती ।
† इयं नर्मदा दृश्यते ।
‡ इतोऽस्माकमार्यसुमन्त्रो निवृत्तः ।

विभीषणः । वामतो दर्शयन् अयमसाविता विश्वम्भराशिरःशेखर इव लाटदेशः ।

रामः ।

यद्योनिः किल संस्कृतस्य सुदृशां जिव्हासु यन्मोदते
यत्र श्रोत्रपथावतारिणि कटुर्भाषाक्षराणां रसः ।
गद्यं चूर्णपदं पदं रतिपतेस्तत्प्राकृतं यद्वच-
स्ताल्लाटाल्ललिताङ्गि पश्य नुदती दृष्टेर्निमेषव्रतम् ॥७८॥

किञ्च ।

लक्षीकर्तुं प्रवृत्तोऽपि लाटीलङ्हवीक्षितैः ।
लक्षीभवति कन्दर्पः स्वेषामेवात्र पत्रिणाम् ॥ ७९ ॥

सुग्रीवः । अयमुज्जयिनीनिवासी भगवान् महाकालनाथः ।

रामः । अञ्जलिं बद्ध्वा ।

यन्मनस्ताडनाद्वक्रः कामकेतकसायकः ।
स्थितः शशिच्छलेनैव मौलौ स जयतीश्वरः ॥ ८० ॥

सीतां प्रति ।

खेले संचरितुं तरङ्गतरलभ्रूलेखमालोकितुं
रम्यं स्यातुमनादरार्पितमनोमुग्धं च संभाषितुम् ।
सन्त्यज्योज्जयिनीजनीर्विवदितुं हृद्यं च हे जानकि
प्रत्यङ्गार्पणसुन्दरं च न जनो जानाति रन्तुं परः ॥ ८१ ॥

किञ्च ।

चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि ।
आवन्त्य एव निपुणाः सुदृशो रतकर्म्मणि ॥ ८२ ॥

सीता । संस्कृतमाश्रित्य ।

प्रावृषेण्यं हि सस्यानां किं समुत्पत्तिकारणम् ।

त्रिजटा । प्रतिसंस्कृतेन । मालवाः ।

सीता ।

दृश्यन्ते लोचनानन्दहेतवस्त इमे जनाः ॥ ८३ ॥

रामः ।

एतन्मालवमण्डलं विजयते सौजन्यरत्नाकरैः
सम्यग्विभ्रमधामभिः किमपरं शृङ्गारसारैर्जनैः ।
यत्रारुह्य विचित्ररत्नवलभीर्नानाशिलासद्मनां
नीयन्ते जलदोदयेषु दिवसाः कान्तासखैः कामिभिः ॥ ८४ ॥

सीता । वेणिलट्ठिव्व वसुंधरापुरंधीए णीसंदपंकव्व गअणस्स इंदणीलकंठिअव्व उत्तरदिसाए पुरदो कालिंदी दीसदि* ।

रामः ।

सेयं सुभ्रु पुरः कलिन्दतनया गीर्वाणसिन्धोः सखी
वासः कालियपन्नगस्य यमुना दृग्गोचरे वर्तते ।
वन्दस्वार्यमणीमिमां दुहितरं वैवस्वतस्यानुजां
यस्याः स्वर्णपरीक्षणक्षमदृषत्तापी स्वसा सोदरी ॥ ८५ ॥

सीताप्रणमति ।

लक्ष्मणः । आर्यादूरवर्तिनी भगवत्ययोध्या । इमेऽन्तर्वेदीभूषणं पञ्चालाः ।

रामः । सीतां प्रति ।

यत्रार्ये न तथानुरज्यति कविर्ग्रामीणगीर्गुम्फने
शास्त्रीयासु च लौकिकीषु च यथा भव्यासु नव्योक्तिषु ।

---

* वेणियष्टिरिव वसुन्धरापुरन्ध्र्या निस्यन्दपङ्कमिव गगनस्येन्द्रनीलकण्ठकेवोत्तरदिशः पुरतः कालिन्दी दृश्यते ।

पञ्चालास्तव पश्चिमेन त इमे वामा गिरां भाजना-
स्त्वद्दृष्टेरतिथीभवन्तु यमुनां त्रिस्रोतसं चान्तरा ॥ ८६ ॥

किञ्च ।

प्रपञ्चितकलातन्त्रे पाञ्चालीकेलिकर्मणि ।
सर्वास्त्रनोच्चं लभते युगपत् कुसुमायुधः ॥ ८७ ॥

लक्ष्मणः । इदं पुनस्ततोऽपि मन्दाकिनीपरिक्षिप्तं महोदयं नाम नगरं दृश्यते ।

रामः ।

शश्वत्सुधामवसुधामहितं द्विषद्भि-
र्नो गाहितं भवति गाधिपुरं पुरस्तात् ।
वैदेहि देहि शफरीसदृशं दृशं त-
दस्मिन्नितम्बिनि नितम्बवहद्धुसिन्धौ ॥ ८८ ॥

इदं द्वयं सर्वमहापवित्रं
परस्परालङ्करणैकहेतुः ।
पुरं च हे जानकि कान्यकुब्जं
सरिच्च गौरीपतिमौलिमाला ॥ ८९ ॥

अपि च ।

यो मार्गः परिधानकर्मणि गिरां यः सूक्तिमुद्राक्रमो
भङ्गिर्या कबरीचयेषु रचनं यद्भूषणालीषु च ।
दृष्टं सुन्दरि कान्यकुब्जललनालोकैरिहान्यच्च य-
च्छिक्षन्ते सकलासु दिक्षु तरसा तत्कौतुकिन्यः स्त्रियः॥९०॥

विमानवेगनाटितकेन लक्ष्मणः । आर्य दिव्यसरितोर्गङ्गायमुनयोरयमग्रे सङ्गमः ।

रामः । सीतां प्रति ।

न्यग्रोधोऽयं वन्द्यतां श्यामनामा
शम्भोर्भ्रष्टा खेचराज्जाह्नवीयम् ।
कालिन्दी च प्राश्रिता तत्पयोभि-
स्तीर्थं ह्येतत् स्वर्गमार्गः प्रयागः ॥ ९१ ॥

सर्वे वन्दन्ते ।

लक्ष्मणः । पूर्वतो दर्शयन् इयमितो भगवतो भर्गस्य केलि-वासो वाराणसी ।

यद्वाचंयमवृत्तयः किमपरं नीवारमुष्टिंपचाः
सत्यं ज्योतिरुपासते सुकृतिनो द्राक् संवदन्ते च नः ।
नित्यासन्नतयात्र खण्डपरशोर्वाराणसीवासिनः
संभोगैरपि सुभ्रुवां तदक्षरं विन्दन्ति नन्दन्ति च ॥९२॥

सीता । दसकंठसूदन वाराणसीसंकित्तणेण सुमराविदम्हि अक्खिआणन्दं जणणीभूदं मिहिलं महाणअरिं * ।

रामः । भगवन् विमानराज दर्शय सीतायै तत्र भवतो जनकस्य राजधानीम् ।

किञ्चिद्दूर्द्धगतिनाटितकेन रामः ।

अन्तेवासी यदधिवसति स्वर्मणेर्याज्ञवल्क्यो
यत्रायन्ते निमिकुलभुवः प्रत्यहं भूमिपालाः ।
तत्ते चक्षुर्विशतु मिथिलामण्डलं जन्मभूमिं
यत्रोढासि त्रिनयनधनुःखण्डनाडम्बरेण ॥ ९३ ॥

---

* दशकण्ठसूदन वाराणसीसंकीर्तनेन स्मारितास्मि अक्ष्यानन्दां जननी-भूतां मिथिलां महानगरीम् ।

सीता । भअवदि मिहिलाणअरि समं गुरुअणेण एसा पणमिज्जसि * ।

विभीषणः । इह किल रामदेवेन क्षत्रियान्तकरणस्य भङ्गो भार्गवमुनेर्दत्तः । सुग्रीवः ।

अपां फेनेन तृप्तोऽसौ स्नातश्चन्द्रिकयाऽपि सः ।
यदप्रसूतकौशल्यं क्षत्रं क्षपितवान्मुनिः ॥ ९४ ॥

रामः । लज्जमानः सीतां प्रति ।

यत्रार्थातिशयोऽपि सूत्रितजगन्मर्यादया मोदते
संदर्भश्च समासप्रासलवदप्रस्तारविस्तारितः ।
उक्तिर्योगपरंपरापरिचिता काव्येषु चक्षुष्मतां
सा रम्या नवचम्पकाङ्गि भवतु त्वन्नेत्रयोः प्रीतये ॥ ९५ ॥

सीता । दूरादवलोकनं नाटयित्वा लंघिदसाअरादो हणुमंतादो वि दूरदेसदंसिणी दिट्ठी सिग्घत्ति पडिहाअदि † ।

ततः प्रविशति हनूमान् ।

हनूमान् । प्रणम्य देव मत्तः श्रुतवृत्तान्तो वसिष्ठः समं भरतशत्रुघ्नाभ्यामन्याभिश्च प्रकृतिभिस्त्वदभिषेकसज्जस्तिष्ठति । सर्वे परिक्रामन्ति ।

रामः । पुरोऽवलोक्य प्रणम्य च ।

सज्ञां रवेः प्रभवतां कुलराजधानी-
मालोकयामरपुरीप्रतिमामयोध्याम् ।

---

* भगवति मिथिलानगरि समं गुरुजनेनैषा प्रणम्यसे ।

† लङ्घितसागराद्धनुमतोऽपि दूरदेशदर्शिनी दृष्टिः शीघ्रेति प्रतिभाति ।

वार्भिः शरच्छशिकरद्युतिभिः सरय्वां
या पूर्वपार्थिवयशोभिरिवावभाति ॥ ९६ ॥

सर्वे प्रणमन्ति ।

रामः । पुरोऽवलोक्य विमानराज वसिष्ठादयोऽपि मां प्रत्युद्यातुकामास्तन्ननु नरेन्द्रराजकुलेऽस्मिन्नवतरामः । सर्वे ऽवतरणं नाटयन्ति ।

ततः प्रविशति वसिष्ठो भरतशत्रुघ्नौ च ।

वसिष्ठः । वत्स भरत शत्रुघ्न ।

शिष्ये शम्भोर्व्यधित यदयं यच्च धातुः प्रपौत्रे
कस्तेनास्मिन् जगति न जनो विस्मितः सस्मितश्च ।
अभ्युत्थातुं वयमपि ततो रामभद्रं प्रवृत्ता
दिष्ट्या दृष्टं दशरथकुलं श्वेतमानैर्यशोभिः ॥ ९७ ॥

सर्वे परिक्रामन्ति ।

रामः । सविनयमुपसृत्य सपादोपग्रहम् ।

इक्ष्वाकूणां कुलगुरुं श्रेष्ठं चित्रशिखण्डिनाम् ।
अरुन्धतीपतिमृषिं राम एषोऽभिवन्दते ॥ ९८ ॥

वसिष्ठः । का दीयतां तवेत्यादि पठति ।

रामः । आर्षं हि वचनं विभिन्नवक्तृकमपि न विसंवदति यदगस्त्यवाचा भगवान् वसिष्ठोऽपि ब्रूते ।

सीता प्रणमति ।

वसिष्ठः । जनकराजपुत्रि रामाशिषैवाशीस्ते । किञ्च ।

अन्ययोगव्यवच्छेद दुपास्ते यदरुन्धती ।
संविभक्तं त्वया पुत्रि तत्संप्रति सतीव्रतम् ॥ ९९ ॥

लक्ष्मणः । काकुत्स्थकुलगुरो मैत्रावरुणे लक्ष्मणोऽभिवादयते ।

वसिष्ठः । वत्स लक्ष्मण जितेन्द्रजितस्तव किमाशास्महे ।

भरतः । आर्य रावणविद्रावण एष भरतोऽभिवादयते ।

रामः । बाहू प्रसार्य एह्येहि वत्स भरत ।

परिष्वजामि सोत्कण्ठो मां प्रतीपं परिष्वज ।
आलिङ्गिते भ्रातृगात्रे कवोष्णः सोऽपि चन्द्रमाः ॥१००॥

भरतः । सीतां वन्दते ।

सीता । वच्छ भरध उट्ठावीअदु वअणंदू भोदु दे आणंदमंदपरिप्फंदा दिट्ठी* ।

शत्रुघ्नः । आर्य पादसेवाविसंवादी शत्रुघ्नः प्रणमति ।

रामः । शत्रुघ्नमुत्थाप्यावलोक्य च दिष्ट्या द्वितीयलक्ष्मणो दृश्यते ।

शत्रुघ्नः । सीतां प्रणमति ।

सीता । वच्छ सत्तुहण चिरं णंद जणणीजणो दे कहिं† ।

शत्रुघ्नः । माङ्गलिक्यपाणिरन्तःपुरवीवे तिष्ठति ।

लक्ष्मणो भरतं वन्दते ।

भरतः ।

हे लक्ष्मण सलक्ष्मीक परिष्वज महाभुज ।
आर्यसेवापवित्राणि गात्राणि सुखयन्तु माम् ॥१०१॥

---

* वत्स भरत उत्थाप्यतां वदनेन्दुर्भवतु ते आनन्दमन्दपरिस्यन्दा दृष्टिः ।

† वत्स शत्रुघ्न चिरं नन्द जननीजनस्ते क्व ।

शत्रुघ्नः । लक्ष्मणं परिष्वज्य निर्विघ्ननिर्वाहितरामदेवादेशे त्वयि द्विगुणं खिद्यति मनः ।

रामः । भगवन्मैत्रावरुणे किष्किन्धापतिरेष सुग्रीवो भास्करिरयं च लङ्कापरमेश्वरो बिभीषणः पौलस्त्योऽभिवन्दते ।

वसिष्ठः । दीर्घप्रशस्तिस्तम्भाविमौ भवतां भवतः ।

रामः । भरत परिष्वजस्वैतौ सीतादेवरौ ।

भरतसुग्रीवबिभीषणाः परस्परं परिष्वजन्ते ।

वसिष्ठः ।

रामो दान्तदशाननः किमपरं सीता सतीष्वग्रणीः
सौमित्रिः सदृशोऽस्तु कस्य समरे येनेन्द्रजिन्निर्जितः ।
किं ब्रूमो भरतं च रामविरहे तत्पादुकाराधकं
शत्रुघ्नः कथितोऽग्रजस्य च गुणैर्वन्द्यं कुटुम्बं रघोः ॥ १०२ ॥

रामं प्रति वत्स दाशरथे रामचन्द्र प्रशस्तो मुहूर्त्तो वर्तते तदध्यास्व पित्र्यं सिंहासनमेषोऽभिषिच्यसे ।

रामः । तथा कुरुते ।

वसिष्ठवर्ज्जं सर्व्वे साष्टाङ्गं प्रणमन्ति । नेपथ्ये मङ्गलगीतध्वनिर्नान्दीवाद्यं च । आकाशे ।

आराधितो रघुकुलोद्वह पुष्पकं प्राक्-
पालं चिरादिदमदत्त पतिः पशूनाम् ।
तस्य प्रभुस्त्वमिह संप्रति तत्प्रयच्छ
त्वां याचते धनद एष वृषाङ्कमित्रम् ॥ १०३ ॥

वसिष्ठः । वत्स रामभद्र धन्योऽसि यस्य ते तत्रभवानाम कुबेरोऽर्थी ।

रामः । विमानराज भगवता धनदेन प्रार्थ्यसे समर्थ्यसे च । ऊर्द्ध्वमवलोक्य कथं धनदमुपस्थातुं विमानराजः प्रतिष्ठते ।

वसिष्ठः । रामं प्रति किं ते भूयः प्रियमुपकरोमि ।

रामः । अतः परमपि प्रियमस्ति ।

रुग्णं चाजगवं नचापि कुपितो भर्गस्सुरग्रामणीः
सेतुश्च ग्रथितः प्रसन्नमधुरो दृष्टश्च वारां निधिः ।
पौलस्त्यश्च हतः स्थितश्च भगवान् प्रीतः श्रुतीनां कविः
प्राप्तं यानमिदं च याचितवते दत्तं कुबेराय च ॥ १०४ ॥

तथापीदमस्तु ।

सम्यक्संसारविद्याविषदमुपनिषद्भूतमर्थाद्भुतानां
ग्रथ्नन्तु ग्रन्थिबन्धं वचनमनुपतत्सूक्तिमुक्ताःसुयुक्ताः ।
सन्तः संतर्पितान्तःकरणमनुगुणं ब्रह्मणः काव्यमूर्तेस्तत्त्वं सात्त्विकैश्च प्रथमपिशुनितं भावयन्तोऽर्चयन्तु ॥१०५॥

इति निष्क्रान्ताः सर्वे ।

॥ राघवानन्दो नाम दशमोऽङ्कः ॥

समाप्तमेतत्किल बालरामायणं महानाटकमत्र गद्यैः ।
पद्यैः सुधास्वादुभिराद्यविष्णो रामाभिधस्य ग्रथितं चरित्रम् ॥१॥
पाणिग्रहान्मैथिलराजपुत्र्या यावत्पदं पित्र्यमवाप रामः ।
यायावराणां कुलदीपकेन राज्ञां शिखण्डेन कवीश्वरेण ॥ २ ॥
परं पदं काव्यसुधारसस्य ज्ञात्वा समग्रं परिशोध्य सम्यक् ।
प्रकाशितं मुद्रणतस्तदेतद् गोविन्ददेवेन कवीन्द्रतुष्ट्यै ॥ ३ ॥

## ॥ शुद्धिपत्रम् ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| सट्टकाभिधं | सट्टकाभिधं | १ | ८ |
| विदुन्मरोहरां | विद्वन्मनोहरां | १ | ९ |
| रसस्त्रोतसः | रसस्रोतसः | २ | १६ |
| प्रस्कत | प्रस्तुत | ६ | ७ |
| पहाविम्र | पवाहिम्र | ६ | ९ |
| निव्रद्धा | निबन्द्धा | ८ | ७ |
| त्यितः | स्थितः | ९ | १८ |
| व्यत्पत्तिं | व्युत्पत्तिं | ९ | २२ |
| संवृतः | संवृत्तः | १० | २० |
| संपादयित्रा | संपादयित्री | १२ | १ |
| समारोद्दुं | समारोवढुं | २० | ७ |
| एक्कासणो | एक्कासणो | २० | १४ |
| एक्को | एक्को | २० | १५ |
| येशल | पेशल | २३ | १९ |
| वम्महो | मम्महो | २४ | ११ |
| एष | एस | २५ | १३ |
| यदात्ह | यदात्थ | २६ | १२ |
| कस्तुरिकैणी | कस्तूरिकैणी | २८ | ६ |
| पासपडि | पासप्पडि | ३६ | ६ |
| संवृतः | संवृत्तः | ३६ | १८ |
| त्रैय्यम्बकः | त्रैयम्बकः | ४५ | ४ |
| तेज | तेजः | ४५ | २१ |

## ॥ शुद्धिपत्रम् ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| रावणः | रावण- | ४५ | २१ |
| विरिञ्चि | विरञ्चि | ४७ | २१ |
| परत्र | ऽपरत्र | ४९ | १० |
| निबिगेष्म | निबिडोष्म | ४९ | २२ |
| स्त्रोत्रेण | स्तोत्रेण | ५३ | ६ |
| तयैः | तयोः | ५६ | २२ |
| कीदसा | कीद्दिसा | ५७ | ७ |
| शिखगडन | शिखण्डेन | ५७ | १० |
| विरहविनोदा | विरहवेदनविनोदा | ५७ | २२ |
| मिबिड | निबिड | ५८ | २३ |
| ज्योंतीषि | ज्योतींषि | ५९ | ११ |
| रण्ये | ऽरण्ये | ६० | १५ |
| मुठ | मूठ | ६४ | ३ |
| दर्जूनः | दर्जुनः | ६६ | १७ |
| नीमीलित | निमीलित | ६८ | २२ |
| दण्ड | दण्डम | ६९ | ८ |
| चितेन | चित्तेन | ६९ | १७ |
| स्वगम् | स्वगतम् | ७० | ३ |
| रीपून | रिपून | ७० | ५ |
| दूर्मसिं | दूर्मास्सिं | ७० | १५ |
| क्रूपणः | क्रूपाणः | ७१ | १३ |
| पवितित्र | पवित्तित्र | ७१ | १८ |
| स्वगम् | स्वगतम् | ७१ | १९ |
| लङ्कुता | लङ्कृता | ७१ | २२ |
| स्वगम् | स्वगतम् | ७२ | ५ |
| सिष्ठी | सिद्धी | ७३ | १७ |

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| ओएड्र | औएड्र | ७६ | १२ |
| नरेंद्रः | नरेन्द्रः | ७६ | १३ |
| भिधते | भिधत्ते | ८९ | २१ |
| चावाङ्कखै- | चावाङ्कखैः | ९० | ७ |
| पुङ्खितैः | पुङ्खितैः | ९४ | १९ |
| सद्भृङ्गिर्भरा | सद्भृङ्गिर्भरा | ९५ | ९ |
| वत्सै | वत्से | १०२ | १५ |
| रूर्ध्वं | रूर्ध्वं | १०४ | ९ |
| द्वाविंशो | द्वाविंशो | १०६ | ६ |
| निर्मोकेन | निर्मोकेण | १०६ | १४ |
| क्रौञ्च | स्क्रौञ्च | १०६ | २० |
| यदुत्फल्ल | यदुत्फुल्ल | १०९ | १९ |
| सन्यस्त | सन्न्यस्त | ११० | १ |
| सुखिनः परसौख्येन परदुःखेन दुःखिताः । जायन्ते कवयः काव्ये नयतन्त्रे च मन्त्रिणः ॥ | इत्यनुष्टुप्श्लोको- ऽत्रापेक्षितः | ११६ | १५ |
| तदेतद्वा | तदेतद्वा | ११७ | ३ |
| दशनीय | दर्शनीयम् | ११८ | २० |
| सिता | सीता | ११८ | २२ |
| पुरन्ध्यो | पुरन्ध्र्यो | १२३ | २४ |
| भग्र | भग्न | १२६ | २१ |
| रुधन्ति | रुन्धन्ति | १२७ | ९ |
| दलित | दलिद | १२७ | १३ |
| कांक्षास | काङ्क्षास | १२८ | १९ |
| वृते | वृत्ते | १२९ | १० |
| हारार्तं | हारार्त्तं | १२९ | १३ |

## ॥ शुद्धिपत्रम् ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| वतंसिततरणि | वतंसीकृततरणि | १२९ | २३ |
| पविसन्तो | पवसन्तो | १३० | ७ |
| माञ्जिष्टै | माञ्जिष्ठै | १३० | १२ |
| प्रपद्यामहे | प्रपद्यावहे | १३२ | १४ |
| सामग्री | सामग्रीः | १३२ | १५ |
| महते | सुमहते | १३५ | ७ |
| स्त्वव | स्तव | १३५ | ९ |
| षाङ्गुग्य | षाड्गुण्य | १३७ | २१ |
| लुण्ठाकता | लुण्टाकता | १३८ | १८ |
| वत्तेषम् | वत्तेपम् | १३९ | २२ |
| कथमभी | कथममी | १४० | १२ |
| दृशो | दृशो | १४० | १७ |
| कोस्त्यान्यो | कोस्त्यन्यो | १४० | २३ |
| तिभक्ति | त्तिभक्ति | १४१ | ३ |
| सैहिकेय | सैंहिकेय | १४२ | १ |
| प्रणप्रति | प्रणमति | १४२ | १३ |
| पर्पूर | कर्पूर | १४२ | २० |
| व्यवज्ञा | व्यवज्ञा | १४३ | २१ |
| खतित्र | खत्तित्र | १४४ | ११ |
| स्वगम् | स्वगतम् | १४४ | १२ |
| मायामस्तौ | मायामयस्तौ | १४५ | १९ |
| गावग | गावग्ग | १४८ | १६ |
| ग्धाणं | ग्घाणं | १५१ | १ |
| नेपथ्य | नेपथ्ये | १५१ | १२ |
| किंति | कित्ति | १५३ | १० |
| चउत्थी | चउत्थी | १५३ | १९ |

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| जजाखि | जगाखि | १५३ | २० |
| दुर्यश | दुर्यशो | १५३ | २३ |
| श्वश्रूः | श्वश्रु | १५४ | १५ |
| दुर्यश | दुर्यशः | १५४ | १७ |
| भरघ | भरद्व | १५५ | ३ |
| मायामत्र | मात्रामत्र | १५५ | १३ |
| दुर्यश | दुर्यशः | १५५ | २२ |
| अगणो | अगणोरा | १५७ | २ |
| रात्र | रात्र | १५७ | १२ |
| प्रवस्य | प्रवस | १५८ | २१ |
| रूढोलप | रूढोपल | १६२ | ७ |
| जाव | दाव | १६३ | ७ |
| मारूठाः | मारूढाः | १६३ | ९ |
| स्वशमनं | स्वमशनं | १६५ | २ |
| तरीया | त्तरीया | १६५ | ८ |
| हृष्यं | च हृष्यं | १६६ | २ |
| उल्लङ्घ | उल्लङ्घ्य | १६६ | १२ |
| क्क | क्कि | १६६ | २१ |
| द्वियो | द्विपो | १६७ | १९ |
| विध्यं | विन्ध्यं | १६७ | २१ |
| राहव | राहव | १६८ | ७ |
| त्कणडी | त्कणठी | १६८ | १२ |
| विन्ध | विन्ध्य | १६९ | २१ |
| वैडूर्यं | वैडूर्यं | १७३ | १ |
| यदो | तदो | १७३ | ३ |
| वृतः प्रवृतः | वृत्तः प्रवृत्तः | १७३ | १८ |

## ॥ शुद्धिपत्रम् ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| वक्कस्य वक्काणि | वक्कस्य वक्काणि | १७३ | २१ |
| दुर्यश | दुर्यशो | १७४ | २४ |
| द्वितीयो | द्वितीयः | १७४ | २४ |
| निमीलिदनयणो | णिमीलिदणअणो | १७८ | १३ |
| दाम | द्दाम | १७९ | १० |
| त्तिपथ | त्तिपत | १८४ | २१ |
| मुपाट्य | मुत्पाट्य | १८५ | १२ |
| काच्चन | काञ्चन | १८६ | १० |
| वह इति | वहे इति | १८७ | १४ |
| यज्जला | यज्जला | १८८ | ४ |
| द्वद्वै | द्वन्द्वै | १८८ | ६ |
| द्रश्यामि | द्रक्ष्यामि | १८९ | ३ |
| वाणरणं | वाणराणं | १९४ | २ |
| स्तिति | स्तिमि | १९६ | १२ |
| रसोक्करिस | रसोक्करिस. | १९८ | ५ |
| णिमितं | णिमित्तं | १९९ | ९ |
| संध | संघ | १९९ | ११ |
| निशायर | निशाअर | २०० | ६ |
| गीअं च | गीओ अ | २०० | ११ |
| अम्बरं | अन्तरं | २०२ | ७ |
| उक्कलिय | उक्कलिअ | २०२ | ९ |
| मुगुप्सित | जुगुप्सित | २०२ | २४ |
| प्रणष्टः | प्रनष्टः | २०७ | ३ |
| वित्थरन्त | णित्थरन्त | २०९ | ७ |
| जल | जल | २११ | ४ |
| काकुत्स्थ | काकुस्थ | २१२ | ३ |

## ॥ शुद्धिपत्रम्. ॥

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| तद्वा | तद्वा | २१३ | १० |
| देवस्य | देवस्स | २२० | ३ |
| वरवनाः | वरवनः | २२० | २३ |
| शाययितव्या | शाययितव्य | २२२ | १० |
| यदान्तरे | पदान्तरे | २२२ | १९ |
| तता | तदो | २२३ | ५ |
| द्वारा | द्वारा | २२३ | ८ |
| यद्वरवा | यद्धुरवा | २२४ | ६ |
| स्विद्यसे | खिद्यसे | २२५ | १७ |
| पमान | पुमान | २२७ | ५ |
| निगालन्त | निग्गलन्त | २२७ | १५ |
| विनोचन | विरोचन | २२८ | १९ |
| वेणा | वेण णा | २३० | १३ |
| विकिरिता | विकिरतो | २३४ | ३ |
| भुवदण्ड | भुग्नदण्ड | २३६ | १५ |
| न्द्योतिद | न्द्योलिद | २३६ | १८ |
| भुवग्रण | भुग्नण | २३७ | ६ |
| केणी | वेणी | २३८ | २१ |
| चुबुकाग्रे | चिबुकाग्रे | २३८ | २२ |
| जिघांस्यति | जिघांसति | २४० | १४ |
| गञ्जा | गुञ्जा | २४४ | २२ |
| स्वित्ता | खित्ता | २४५ | १८ |
| नखेहिं | णखेहिं | २४६ | ११ |
| पडत्ताओ | पउत्ताओ | २४८ | १७ |
| पेख्खवु | पेख्खदु | २४८ | १८ |
| गया | गय | २५१ | १७ |

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| दरिमुख | दरीमुख | २५१ | १८ |
| मिदंतनुचितं | मिदंत्वनुचितं | २६० | ३ |
| दाशरिथना | दाशरथिना | २६२ | १ |
| मुउदलिद | मुद्गलिद | २६२ | ११ |
| पवन्न | पवण्ण | २६२ | १४ |
| जत्तपत्ता | यत्तपत्ता | २६२ | २२ |
| सविचिकित्स | सविचिकित्सा | २६३ | १३ |
| घिठिदं | धिट्ठिदं | २६३ | २१ |
| मल्लयो | मलयो | २६४ | २५ |
| ज्जपिन्या | ज्जयिन्या | २७८ | ६ |
| द्रोणान्द्रि | द्रोणाद्रि | २८५ | ५ |
| कोना | केना | २८५ | ७ |
| पूष्पकं | पुष्पकं | २८५ | १६ |
| त्स्कृते | त्कृते | २८६ | १२ |
| भ्रामिणा | भ्रमिणा | २९० | १८ |
| स्नानोतीर्णा | स्नानोत्तीर्णा | २९१ | ७ |
| शशि | राशि | २९३ | २३ |
| यमाणाय | पमाणाप | २९४ | ३ |
| यत्स्वातः | यत्खातः | २९४ | ५ |
| द्वीप | द्वीप | २९४ | १८ |
| खादिष्ठा | स्वादिष्ठा | २९४ | १९ |
| मूर्द्ध | मूर्द्ध | २९७ | ५ |
| त्तरङ्गि | तरङ्गि | २९८ | २ |
| राघे | राधा | २९८ | ७ |
| चन्द्रना | चन्दना | २९८ | ७ |
| किञ्चितिष्ठ | किञ्चित्तिष्ठ | २९८ | २० |

| अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । |
|---|---|---|---|
| हरिणा | हरिणा | २९९ | ४ |
| भर्वति | भगवति | २९९ | २० |
| बिभ्रद्व्योम्नः | विभ्रद्व्योम्नः | २९९ | २२ |
| स्वविरै | स्ववीरै | ३०० | १० |
| तिरे | तीरे | ३०१ | १६ |
| अत्रान्था | अत्रान्धा | ३०२ | ३ |
| स्ताल्लाटाल्ल | स्तांल्लाटांल्ल | ३०४ | ७ |
| वसंधरा | वसुन्धरा | ३०५ | १० |
| कुसुमासुधः | कुसुमायुधः | ३०६ | ५ |
| शुत | स्नुत | ३०८ | १५ |
| सज्ञां | राज्ञां | ३०८ | १९ |
| कूलगुरुं | कुलगुरुं | ३०९ | १५ |
| व्यवच्छेद | व्यवच्छेदा | ३०९ | २२ |
| यद्दरुन्धनी | यद्दरुन्धती | ३०९ | २२ |
| काकुत्स्य | काकुस्थ | ३१० | १ |

---